आयुर्वेदीयग्रन्थमाला

तृतीयं पुष्पम् ।

श्रीवैद्यसोढलविरचितो

# गदनिग्रहः ।

( प्रथमः प्रयोगखण्डः । )



आचार्योपाह्वेन त्रिविक्रमात्मजेन यादवशर्मणा

संशोधितः

प्रकाशितश्च ।

( द्वितीयं संस्करणम् )

सं. १९८०

मूल्यं रूप्यकद्वयम् ।

ÂYURVEDÎYA GRANTHAMÂLÂ.
No. III.

# GADANIGRAHA

( PRAYOGA KHAND VOL. 1. )

BY

VAIDYA SODHAL.



EDITED AND PUBLISHED
BY

VAIDYA JÂDAVJI TRICUMJI ÂCHÂRYA

No. 18, BORÂ BAZÂR STREET, FORT, BOMBAY.

*SECOND EDITION.*

1924 A. D.

*Price Rs. 2 only.*

# भूमिका ।

—:०:—

गदनिग्रहकर्ताऽयं सोढलवैद्यो गुर्जरदेशनिवासी, रायकवालाख्यब्राह्मणजातीयः[1] वैद्यनन्दनपुत्रः, वत्सगोत्रोत्पन्नश्चेति तेन स्वविरचिते गुणसंग्रहापरपर्याये सोढलनिघण्टुनाम्नि ग्रन्थे प्रोक्तादात्मवृत्तान्तात्[2] प्रतीयते । स चायं सोढलवैद्यः कस्मिन् समये समजनीत्येतन्निर्णेतुं न किंचिदपि साधनमुपलब्धमस्माभिः । सोढलविरचितो गदनिग्रहव्यतिरिक्तो गुणसंग्रहापरपर्यायः **सोढलनिघण्टु**रिति प्रसिद्धोऽन्योऽपि ग्रन्थः समुपलभ्यते । तत्र धन्वन्तरिनिघण्टुराजनिघण्टुप्रभृतिष्वनुक्तानां प्रायो गुर्जरदेशप्रसिद्धानामेकशतद्रव्याणां नामानि सगुणान्यधिकान्युक्तानि । यद्यपि चिकित्साविषयकाश्चक्रदत्तवङ्गसेनयोगरत्नाकरप्रभृतयो बहवो ग्रन्था मुद्रितास्तथापि भूरिप्रयोगवत्त्वात्, सरलत्वाच्चायमेव सर्वानतिशेते । ग्रन्थेऽस्मिन् प्रयोग–कायचिकित्सा–शालाक्य–शल्य–भूततन्त्र–बालतन्त्र–विषतन्त्र–रसायन–वाजीकरण—पञ्चकर्माधिकाराख्या दश खण्डाः सन्ति । तत्र प्रथमे प्रयोगखण्डे घृततैलचूर्णगुटीलेहासवाख्याः षडधिकारा विद्यन्ते । तेषु षट्स्वधिकारेषु पञ्चाशीत्यधिकपञ्चशतमिताः प्रत्यक्षफलप्रदाश्चिकित्सायां नित्योपयोगिनश्च प्रयोगा उक्ताः । अत्रोक्तप्रयोगेषु बहवः प्रयोगा मुद्रितेषु चिकित्साग्रन्थेष्वनुक्ताः । अतोऽयं खण्डो वैद्यानां चिकित्सायामतीवोपयुक्तो भविष्यतीति पृथगेवायं प्रसिद्धीकृतः । ग्रन्थस्यास्य आदर्शपुस्तकत्रयमुपलब्धं; एकं अस्मत्परमसुहृदां स्वर्गवासिनां वैद्यमुरारजीशर्मणां, अपरं च जुन्दीनगरनिवासिनां राजवैद्यानां श्रीप्रसादशर्मणां तृतीयं मोरवीनगरनिवासिनां राजवैद्यानां विश्वनाथ विठ्ठलजी भट्ट इत्येतेषाम् । घृततैलचूर्णगुटीलेहासवानां परिभाषाः सोढलेनानुक्ता अप्यस्माभिर्ग्रन्थान्ते संनिवेशिताः । ग्रन्थस्यास्य संशोधने यथामति कृतो यत्नः । तथापि भ्रमप्रमादादिवशाज्जातं स्खलनं क्वाप्युपलभ्येत चेत्सुधीभिः संशोधनीयं क्षन्तव्यश्चाहं, सफलीकर्तव्यश्च ममायं प्रयासो ग्रन्थस्यास्य पठनपाठनपर्यालोचनादिनेति ॥

यादवशर्मा.

---

१. रायकवालब्राह्मणानां वसतिः सांप्रतं गुर्जरदेश एवोपलभ्यते । २. यथा—
" वत्सगोत्रान्वयस्तत्र वैद्यनन्दननन्दनः । शिष्यः संघदयालोश्च रायकवालवंशजः ॥
सोढलाह्वयो भिषक् मानुराक्पदपङ्कजषट्पदः । चकारेमं चिकित्सायां समग्रं गुणसंग्रहम्—" इति ॥

# गदनिग्रहस्य प्रयोगखण्डान्तर्गतविषयाणामनुक्रमणिका ।

### तैलाधिकारो द्वितीयः ।

चूर्णाधिकारस्तृतीयः।

श्रीशोढलविरचितो

# गदनिग्रहः ।

## अथ प्रयोगखण्डः प्रथमः ।

### मङ्गलाचरणम् ।

करकिशलयसङ्गी यस्य पीयूषकुम्भः
परममरवधूनां भूयसे मङ्गलाय ।
स खलु निखिलदुग्धाम्भोधिरत्नेषु रत्नं
हरतु दुरितराशीनाशु धन्वन्तरिर्वः ॥ १ ॥
त्रिभुवनजनरोगग्रामसंग्रामजेताऽ-
मृतभृतघृतकुम्भोद्गीर्णहस्तायुधश्रीः ।
अमरमथितदुग्धाम्भोधिलब्धोदयोऽसौ
दलयतु दुरितौघानाद्यवैद्याधिपो वः ॥ २ ॥
नानामुनिकृतैः श्लोकैः शोढलेनाल्पबुद्धिना ।
विबुधमतिबोधाय ग्रथ्यते गदनिग्रहः ॥ ३ ॥

### ग्रन्थानुक्रमणिका

घृतं तैलं च चूर्णानि गुटीलेह्यौ तथाऽऽसवाः ।
आदावेते ह्यनेकार्था ग्रन्थेऽस्मिन् गदनिग्रहे ॥ ४ ॥
ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विसूचिका ।
अलसश्च विलम्बी च कृमिरुक् पाण्डुकामले ॥ ५ ॥
हलीमकमसृक्पित्तं राजयक्ष्मोरसः क्षतम् ।
कासो हिक्का सह श्वासैः स्वरभेदस्त्वरोचकः ॥ ६ ॥
छर्दिस्तृष्णा च मूर्च्छा च रोगाः पानान्मदात्ययः ।
दाहो वातविकाराश्च वातरक्तोरुरुक् तथा ॥ ७ ॥

---

१ '० कुम्भोद्गीर्ण०' इति पा०।२ 'विदलतु' इति पा०।

आमवातस्तथा शूलं शूलं च परिणामजम् ।
अर्दितमथानाह उदावर्तोऽथ गुल्मकम् ॥ ८ ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाऽश्मरी ।
प्रमेहा मधुमेहश्च पिडकाश्च प्रमेहजाः ॥ ९ ॥
मेदोदोषोदरं शोथो विद्रधिर्वृद्धिरेव च ।
कुष्ठे श्वित्रे शीतपित्तमुदर्दः कोठ एव च ॥ १० ॥
अम्लपित्तं विसर्पश्च विस्फोटोऽथ मसूरिका ।
इति कायचिकित्सायां मया रोगाः प्रकीर्तिताः ॥ ११ ॥
शालाक्ये शिरसो रोगाः कर्णनासामुखास्तथा ।
नागासुरामयाश्चैव द्वितीयेऽङ्गे निरूपिताः ॥ १२ ॥
गण्डमालाऽपची ग्रन्थिः पिडिकार्बुदमन्ययः ।
श्लीपदे व्रणशोथश्च सद्योव्रणचिकित्सितम् ॥ १३ ॥
भग्ननाडीव्रणौ चैव भगन्दरोपदंशकौ ।
शूकरोगाः क्षुद्ररोगाः शल्ये चाङ्गे निरूपिताः ॥ १४ ॥
भूतोन्मादस्तथोन्मादस्तथाऽपस्मार एव च ।
भूततन्त्रे चतुर्थेऽङ्गे मानसाश्च चिकित्सिताः ॥ १५ ॥
प्रदरो योनिव्यापच्च गर्भस्यापि चिकित्सितम् ।
मूढगर्भोऽथ वन्ध्या च योनिशूलग्रहास्तथा ॥ १६ ॥
सूतिका स्तन्यदोषाश्च गाढनिर्लोमभेषजम् ।
बालरोगचिकित्सा च बालतन्त्रेऽथ पञ्चमे ॥ १७ ॥
सर्पलूताविषे चैव वृश्चिकोन्दुरुजं विषम् ।
नखदन्तविषं चैव खर्जूरं कृत्रिमं विषम् ॥ १८ ॥
षष्ठे त्वङ्गे विषाख्ये च प्रोक्तं चैषां चिकित्सितम् ।
रसायनं सप्तमं च वाजीकरणमष्टमम् ॥ १९ ॥
पञ्चकर्माधिकारे च स्नेहस्वेदविधिस्तथा ।
वमनं च विरेकश्च नस्यकर्मेत्यनुक्रमः ॥ २० ॥

---

१ सार्धमितो पाठस्तीर्थविशिष्टः ।

अथातः प्रथमो घृताधिकारः प्रारभ्यते ॥

ज्वरे मञ्जिष्ठाद्यं घृतम् ।

मञ्जिष्ठाऽतिविषा पथ्या वचा शुण्ठी च रोहिणी ॥ १ ॥
देवदारु हरिद्रा च द्रोणेऽपां पलिकान् पचेत् ।
क्वाथेऽस्मिन् साधयेत् पिष्टैर्घृतमस्थं पिचून्मितैः ॥ २
शृङ्गवेरकणाहिङ्गुद्विक्षारपटुपञ्चकैः ।
तत्कृतादृतसर्वास्थज्वरिणाममृतोपमम् ॥ ३ ॥
वर्मगुल्मानिलश्वासकासपाण्डुविकारिणाम् ।
गलग्रन्थिप्रमेहार्शःप्लीहापस्मारशोफिनाम् ॥ ४ ॥
उदावर्तपरीतानां मन्दाग्निकृमिकुष्ठिनाम् ।

द्वितीयं मञ्जिष्ठाद्यं घृतम् ।

मञ्जिष्ठा द्वे हरिद्रे च देवदारु हरीतकी ॥ ५ ॥
नागरातिविषे चैव वचा कटुकरोहिणी ।
हिङ्ग्वेतैरक्षमात्रैस्तु घृतमस्थं प्रसाधयेत् ॥ ६ ॥
एतन्माञ्जिष्ठकं सर्पिर्बहून् रोगान्नियच्छति ।
हिक्कां श्वासं ज्वरं दुष्टं ग्रहणीं पाण्डुरोगताम् ॥ ७ ॥
प्रमेहान्मधुमेहांश्च कृमीन् कुष्ठमरोचकम् ।
कासं शोषमुदावर्तमपस्मारं तथैव च ॥ ८ ॥
प्लीहानं गण्डमालां च ह्यर्शांसि श्वयथुं तथा ।

ज्वरे तिल्वकाद्यं घृतम् ।

तिल्वकस्य पलान्यष्टौ त्रिवृन्मूलत्वचस्तथा ॥ ९ ॥
अंशमत्युरुबूकं च बिल्वाद्यं च पृथक् पलम् ।
यवकोलकुलत्थानां प्रस्थं प्रस्थं फलत्रिकात् ॥ १० ॥
तत्साधयेज्जलद्रोणे चाष्टभागावशेषितम् ।
घृतप्रस्थं पचेत्तेन दत्त्वा दध्नस्तथाऽऽढकम् ॥ ११ ॥
कर्षेण यावशूकस्य पक्वं तदवचूर्णयेत् ।
एतत्तु तैल्वकं नाम जीर्णज्वरविषापहम् ॥ १२ ॥

कृमिकुष्ठहरं चैव शोफपाण्ड्वामयापहम् ।

जीर्णज्वरे हारीतात्कटुकं घृतम् ।

त्रिफलां पञ्चमूल्यौ द्वे कुलत्थान् बदरान् यवान् ॥ १३ ॥
द्विपलांस्तु जलद्रोणे त्वष्टभागावशेषितम् ।
निःस्राव्य विपचेत्कल्कं दत्त्वा प्रस्थं च सर्पिषः ॥ १४ ॥
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
पुष्करातिविषे भार्गी शटी सप्तच्छदो वचा ॥ १५ ॥
रजन्यौ नक्तमालश्च पाठे द्वे शिग्रुतुम्बरु ।
सोमवल्कोऽर्कमूलानि मदनं कटुरोहिणी ॥ १६ ॥
तेजस्विनी सगोजिह्वा चन्दनं कण्टकारिका ।
किराततिक्तकं मुस्तं पटोलं सदुरालभम् ॥ १७ ॥
वयःस्था पिचुमन्दश्च कटुकं हिङ्गुना सह ।
एतानक्षसमान् दत्त्वा क्षारौ ह्यर्धपलोन्मितौ ॥ १८ ॥
लवणानां च पञ्चानां कर्षं कर्षं प्रदापयेत् ।
सिद्धं तन्मात्रया पीतं सर्वजीर्णज्वरापहम् ॥ १९ ॥
हृत्प्लीहग्रहणीदोषश्वासकासार्शसां हितम् ।
गुल्मघ्नं कटुकं नाम कृष्णात्रेयेण पूजितम् ॥ २० ॥
दीर्घकालप्रसक्तानां ज्वराणाममृतोपमम् ।

अग्निमान्द्ये अग्निघृतम् ।

शतं पलानि भल्लातज्जलद्रोणे विपाचयेत् ॥ २१ ॥
चतुर्भागावशेषं तु कषायमवतारयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पलीम् ॥ २२ ॥
हिङ्गुचव्याजमोदं च पञ्चैव लवणानि च ।
द्वौ क्षारौ हपुषां चात्र दद्यादर्धपलोन्मितम् ॥ २३ ॥
मस्त्वम्लरसशुक्राणां प्रस्थं प्रस्थं प्रदापयेत् ।
शृङ्गवेररसप्रस्थं घृतप्रस्थं विपाचयेत् ॥ २४ ॥
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ।

---

१ "सर्पिरात्रेयपूजितम्" इति पा० ।

अर्शांसि वातरोगं च प्लीहोदरजलोदरे ॥ २५ ॥
ग्रन्थ्यर्बुदापचीशोफकुष्ठमेदोऽनिलांस्तथा ।
ये च कुक्षिगता रोगा ये च बस्तिसमाश्रिताः ॥ २६ ॥
तान् सर्वान्नाशयत्येतत्सूर्यस्तम इवोदितः ।

ग्रहण्यां चाङ्गेरीघृतम् ।

पिप्पली नागरं पाठा यवानी विश्वभेषजम् ॥ २७ ॥
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत् ।
भार्गी च पिप्पलीमूलं व्योषं चव्यं सचित्रकम् ॥ २८ ॥
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यवानिका ।
एतैः पलार्धकैर्द्रव्यैः कृत्वा कल्कं विपाचयेत् ॥ २९ ॥
पलानि सर्पिषस्तस्मिन् चत्वारिंशत्समावपेत् ।
चतुर्गुणेन दध्ना च चाङ्गेरीस्वरसेन च ।
मृद्वग्निना ततः साध्यं सिद्धं सर्पिर्निधापयेत् ॥ ३० ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम् ।
शोफप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥ ३१ ॥
कासहिक्कारुचिश्वासमूदनं सर्वगुल्मनुत् ।

अग्निवेशात् गुदभ्रंशे द्वितीयं चाङ्गेरीघृतम् ।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ ३२ ॥
श्वदंष्ट्रा पिप्पली धान्यं विल्वं पाठा यवानिका ।
चाङ्गेरीस्वरसे सर्पिः कल्कैरेषां विपाचयेत् ॥ ३३ ॥
चतुर्गुणेन दध्ना तु तद्घृतं कफवातनुत् ।
अर्शांसि ग्रहणीरोगं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ३४ ॥
गुदभ्रंशार्तिमानाहं घृतमेतद्व्यपोहति ।

गुल्मे दाधिकं घृतम् ।

विडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः ॥ ३५ ॥
हिङ्गुसौवर्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः ।
बीजपूररसोपेतं सर्पिर्दधि चतुर्गुणम् ॥ ३६ ॥

कृमिकुष्ठहरं चैव शोफपाण्ड्वामयापहम् ।

जीर्णज्वरे हारीतात्कटुकं घृतम् ।

त्रिफलां पञ्चमूल्यौ द्वे कुलत्थान् बदरान् यवान् ॥ १३ ॥
द्विपलांस्तु जलद्रोणे त्वष्टभागावशेषितम् ।
निःस्राव्य विपचेत्कल्कं दत्त्वा प्रस्थं च सर्पिषः ॥ १४ ॥
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् ।
पुष्करातिविषे भार्गी शटी सप्तच्छदो वचा ॥ १५ ॥
रजन्यौ नक्तमालश्च पाठे द्वे शिग्रुतुम्बरू ।
सोमवल्कोऽर्कमूलानि मदनं कटुरोहिणी ॥ १६ ॥
तेजस्विनी सगोजिह्वा चन्दनं कण्टकारिका ।
किराततिक्तकं मुस्तं पटोलं सदुरालभम् ॥ १७ ॥
वयःस्था पिचुमन्दश्च कटुकं हिङ्गुना सह ।
एतानक्षसमान् दत्त्वा क्षारौ ह्यर्धपलोन्मितौ ॥ १८ ॥
लवणानां च पञ्चानां कर्षं कर्षं प्रदापयेत् ।
सिद्धं तन्मात्रया पीतं सर्वजीर्णज्वरापहम् ॥ १९ ॥
हृत्प्लीहग्रहणीदोषश्वासकासार्शसां हितम् ।
गुल्मघ्नं कटुकं नाम कृष्णात्रेयेण पूजितम्[1] ॥ २० ॥
दीर्घकालप्रसक्तानां ज्वराणाममृतोपमम् ।

अग्निमान्द्ये अग्निघृतम् ।

शतं पलानि भल्लाताज्जलद्रोणे विपाचयेत् ॥ २१ ॥
चतुर्भागावशेषं तु कषायमवतारयेत् ।
त्र्यूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पलीम् ॥ २२ ॥
हिङ्गुचव्याजमोदं च पञ्चैव लवणानि च ।
द्वौ क्षारौ हपुषां चात्र दद्यादर्धपलोन्मितम् ॥ २३ ॥
मस्त्वम्लरसचुक्राणां प्रस्थं प्रस्थं प्रदापयेत् ।
शृङ्गवेररसप्रस्थं घृतप्रस्थं विपाचयेत् ॥ २४ ॥
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ।

---

१ "सर्पिरात्रेयपूजितम्" इति पा० ।

अर्शांसि वातरोगं च प्लीहोदरजलोदरे ॥ २५ ॥
ग्रन्थ्यर्बुदापचीशोफकुष्ठमेदोऽनिलांस्तथा।
ये च कुक्षिगता रोगा ये च वस्तिसमाश्रिताः ॥ २६ ॥
तान् सर्वान्नाशयत्येतत्सूर्यस्तम इवोदितः।

ग्रहण्यां चाङ्गेरीघृतम्।

पिप्पली नागरं पाठा यवानी विश्वभेषजम् ॥ २७ ॥
भागांस्त्रिपलिकान् कृत्वा कषायमुपकल्पयेत्।
भार्गी च पिप्पलीमूलं व्योषं चव्यं सचित्रकम् ॥ २८ ॥
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका।
एतैः पलार्धकैर्द्रव्यैः कृत्वा कल्कं विपाचयेत् ॥ २९ ॥
पलानि सर्पिषस्तस्मिन् चत्वारिंशत्समावपेत्।
चतुर्गुणेन दध्ना च चाङ्गेरीस्वरसेन च।
मृद्वग्निना ततः साध्यं सिद्धं सर्पिर्निधापयेत् ॥ ३० ॥
ग्रहण्यर्शोविकारघ्नं गुल्महृद्रोगनाशनम्।
शोफप्लीहोदरानाहमूत्रकृच्छ्रज्वरापहम् ॥ ३१ ॥
कासहिक्कारुचिश्वासस्रूदनं सर्वगुल्मनुत्।

अग्निवेशात् गुदभ्रंशे द्वितीयं चाङ्गेरीघृतम्।

नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥ ३२ ॥
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यवानिका।
चाङ्गेरीस्वरसे सर्पिः कल्कैरेषां विपाचयेत् ॥ ३३ ॥
चतुर्गुणेन दध्ना तु तद्धृतं कफवातनुत्।
अर्शांसि ग्रहणीरोगं मूत्रकृच्छ्रं प्रवाहिकाम् ॥ ३४ ॥
गुदभ्रंशार्तिमानाहं घृतमेतव्यपोहति।

गुल्मे दाधिकं घृतम्।

विडदाडिमसिन्धूत्थहुतभुग्व्योषजीरकैः ॥ ३५ ॥
हिङ्गुसौवर्चलक्षाररुग्वृक्षाम्लाम्लवेतसैः।
बीजपूररसोपेतं सर्पिर्दधि चतुर्गुणम् ॥ ३६ ॥
साधितं दाधिकं नाम गुल्मघ्नं प्लीहशूलनुत्।

पित्ते द्राक्षाद्यं घृतम् ।

द्युपाव्योपर्णीकाकन्यानिचकैर्न्यवैः ॥ ३७ ॥
मातार्गीपिप्पलीमूलैर्ध्यार्द्रविपचेद्घृतम् ।
सक्षीरमूलकल्कार्द्धं मधुशीरदाडिमम् ॥ ३८ ॥
तत् परं वातगुल्मघ्नं शूलानाहविनाशनम् ।
योन्यर्शोग्रहणीदोषश्वासकासारुचिज्वरान् ॥ ३९ ॥
बस्तिहृत्पार्श्वशूलं च घृतमेतद्व्यपोहति ।

[illegible] घृतम् ।

समूलपत्रशाखस्य शुण्ठ्याः कुर्याद्रसस्य च ॥ ४० ॥
कल्कांशे त्रिफलाव्योषयवक्षारार्धपलम् ।
कल्केन यष्टिपुष्पाणामाढकं सर्पिषः पचेत् ॥ ४१ ॥
सिद्धं पाययेद्युक्त्या पाडांगमधुना युतम् ।
श्वासं कासं प्रतिश्यायं तृतीयकचतुर्थकौ ॥ ४२ ॥
रक्तपित्तं क्षयं चैव त्रिषु सर्पिर्नियच्छति ।

[illegible] घृतम् ।

वासाकल्कस्वरसे सर्पिः पयसा सह साधयेत् ॥ ४३ ॥
कल्कैः कुटजभूनिम्बमूलपद्मकचन्दनैः ।
[illegible] ॥ ४४ ॥
[illegible] ।
सिताक्षौद्रयुतं हन्याद्रक्तपित्तं सुदारुणम् ॥ ४५ ॥
पित्तं कासं च गुल्मं च स्वरभेदं हलीमकम् ।
ये चान्ये कीर्तिता रोगा रक्तपित्तकफाश्रयाः ॥ ४६ ॥
तान् सर्वान्नाशयत्येतत्पीयमानं हिताशिनः ।

हरीतक्याद्यं [illegible] घृतम् ।

यावशूको वचा व्योषं विडङ्गं कटुरोहिणी ॥ ४७ ॥
सौवर्चलं हरीतक्यश्चित्रकश्चाक्षसंमिताः ।
एभिः पचेद्घृतप्रस्थं दत्त्वा क्षीरजलाढकम् ॥ ४८ ॥

---

१ '[illegible]' इति पा० ।

तत्पक्वं वातगुल्मघ्नं कृमिप्लीहज्वरापहम् ।
कासहिक्कारुचीर्हन्ति दशाङ्गं नाम दीपनम् ॥ ४९ ॥

गुल्मे हारीताल्लशुनघृतम् ।

लशुनाण्डस्य शुद्धस्य तुलार्धं निस्तुपस्य च ।
तदर्धं पञ्चमूलस्य ह्याढकेऽपां विपाचयेत् ॥ ५० ॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा ॥
दाडिमाम्लसुरामस्तुकाञ्जिकाम्लैस्तदर्धकैः ॥ ५१ ॥
साधयेत्त्रिफलादारुलवणव्योषदीप्यकैः ।
यवानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्धकैः॥५२ ॥
सिद्धमेतद्धविः कल्कैर्गुल्मार्शोजठरापहम् ।
वर्ध्मपाण्ड्वामयप्लीहयोनिदोषज्वरापहम् ॥ ५३ ॥
वातश्लेष्मामयांश्चान्यान् घृतमेतद्व्यपोहति ।

हारीताद्गुल्मे नाराचकं घृतम् ।

चित्रकं त्रिफला दन्ती त्रिवृता कण्टकारिका ॥ ५४ ॥
स्नुहीक्षीरं विडङ्गानि घृतं दशममुच्यते ।
एकैकस्य च कर्षेण घृतस्य कुडवं पचेत् ॥ ५५ ॥
चतुर्गुणेन तोयेन सम्यगेतन्मिताग्निना ।
तस्य काले पिबेन्मात्रां पलार्धसंमितां नरः ॥ ५६ ॥
उष्णोदकानुपानं स्यादल्पत्वादस्य सर्पिषः
विरिक्ते च यवागूः स्यात्सर्पिषा परिवर्जिता ॥ ५७ ॥
रसेन जाङ्गलानां वा भोजयेन्मतिमान् भिषक् ।
वातगुल्ममुदावर्तं प्लीहार्शोवर्ध्मकुण्डलम् ॥ ५८ ॥
ग्रहणीं दीपयेन्मेहान् कुष्ठदोषांश्च नाशयेत् ।
नाराचमिति विख्यातं सर्पिर्नाराचसंज्ञितम् ॥ ५९ ॥
भैषज्यं संप्रयोक्तव्यं नाराचमिव शत्रवे ।

कुष्ठे नीलिनीघृतम् ।

नीलिनीं त्रिफलां रास्नां वचां कटुकरोहिणीम् ॥ ६० ॥

च्याघ्रीं पचेद्दिदङ्गं च पञ्चिकानि जलाढके ।
रसेऽष्टभागशेषे तु घृतमस्थं विपाचयेत् ॥ ६१ ॥
दध्नः प्रस्थेन मेधाज्यं सुधाक्षीरपलेन च ।
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ॥ ६२ ॥
जीर्णे सम्यग्विरिक्तं च दापयेद्रसभोजनम् ।
कुष्ठगुल्मोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ॥ ६३ ॥
श्वित्रं प्लीहानमुन्मादं हन्त्येतच्छीङ्खिनीघृतम् ।

चित्रकाद्गुल्मे त्रिफाद्ये घृतम् ।

पञ्चाङ्गैर्विश्वचव्याग्निपिप्पलीक्षारसैन्धवैः ॥ ६३ ॥
क्वाथेन चिरबिल्वस्य घृतमस्थं विपाचयेत् ॥
गुल्मोदावर्तपाण्डुत्वग्रहणीश्वासकासजित् ॥ ६६ ॥
दुष्टज्वरमतिश्यायप्लीहार्शःशमनं परम् ।

आत्रेयाद्गुल्मे षट्पलं घृतम् ।

[illegible] ॥ ६६ ॥
[illegible] ।
क्षीरमस्थेन संयुक्तं हन्ति गुल्मं कफात्मकम् ॥ ६७ ॥
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ।

हारीताद्गुल्मे महाषट्पलं घृतम् ।

सैन्धवं हपुषा पञ्चकोलं सौवर्चलं विडम् ॥ ६८ ॥
अजमोदा यवक्षारो हिङ्गु जीरकमौद्भिदम् ।
कृष्णजरणपूतीकं कल्कीकृत्य पलार्धतः ॥ ६९ ॥
शृङ्गवेररसं चुक्रं घृतमस्थं समीकृतम् ।
विपक्वं पाण्डुरोगघ्नं क्षयपीनसनाशनम्
कृमिप्लीहोदराजीर्णज्वरगुल्मप्रमेहकम् ॥ ७० ॥
वातरोगं तथा शोफं दौर्बल्यं वह्निसंक्षयम् ।
महाषट्पलमातङ्कान् भिनत्त्यशनिवद्गिरिम् ॥ ७१ ॥

१ "कुष्ठज्वर०" इति पा० ।

कुष्ठे मेडानीलं घृतम् ।

द्वौ प्रस्थौ लोहचूर्णस्य त्रिफलात्र्याढकं तथा ।
वायसीकाकमाचीभ्यां द्वे पले शङ्खिनीतुला ॥ ७२ ॥
त्रिद्रोणेऽपां विपक्तव्यं चतुर्भागावशेषितम् ।
घृतप्रस्थं पचेत्तेन गर्भे चैषां समावपेत् ॥ ७३ ॥
वरुणश्च कलिङ्गश्च त्र्यूषणं देवदारु च ।
अवल्गुजफलं दन्तीफलान्यारग्वधस्य च ॥ ७४ ॥
मार्कवः कण्टकारी च पारावतपदी तथा ।
नीलकं नाम विख्यातमित्येतत्कुष्ठनुद्धृतम् ॥ ७५ ॥
श्वित्राणि रञ्जयेच्चैव पानाभ्यङ्गे प्रयोजितम् ।
पामाविचर्चिकासिध्मकिटिभानि च नाशयेत् ॥ ७६ ॥

मेडाकुष्ठे महानीलं घृतम् ।

शम्पाकः काकमाची च बीजको मदयन्तिका ।
एकैकस्य तुला देया प्रत्येकं त्रिफलाढकम् ॥ ७७ ॥
दन्ती दार्वी हरिद्रा च वरुणः कुटजत्वचा ।
चित्रकश्चार्कमूलं च काकमाची निदिग्धिका ॥ ७८ ॥
एषां दशपलान् भागान् त्रिद्रोणेऽपां विपाचयेत् ।
अष्टभागावशिष्टं तु पुनरग्नावधिश्रयेत् ॥ ७९ ॥
वासारसस्तथा धात्र्या जातीस्वरस एव च ।
दधि सर्पिश्च दुग्धं च गोमूत्रं गोशकृद्रसः ॥ ८० ॥
आढकाढकमेतेषां गर्भं चेमं समावपेत् ।
अवल्गुजा तथा व्योषं नक्तमालफलानि च ॥ ८१ ॥
पिचुमर्दश्च जाती च पीलुतिल्वकपल्लवाः ।
किराततिक्तकः श्यामा नीलिकानीलपल्लवाः ॥ ८२ ॥
एतैः सिद्धं परिस्राव्य पाययेत्कुष्ठरोगिणम् ।
महानीलमिति प्रोक्तमेतत्कुष्ठापहं घृतम् ॥ ८३ ॥

---

१ गर्भमिति कल्कमित्यर्थः ।

भगन्दरमथार्शांसि कृमींश्चापि विनाशयेत् ।
अष्टादशैव कुष्ठानि सर्पिरेतन्नियच्छति ॥ ८४ ॥
अथर्वमहितो दीप्तो ब्राह्मो दण्ड इवासुरान् ।
श्वित्राणि तु विशेषेण रञ्जयेच्च भिनत्ति च ॥ ८५ ॥
सेव्यमानं प्रसङ्गेन पानेनाभ्यञ्जनेन च ।

कुष्ठे त्रिफलाद्यं घृतम् ।

त्रिफला मदनं कुष्ठं शार्ङ्गेष्टा रजनीद्वयम् ॥ ८६ ॥
हपुषा काकमाची च शुकनासा विषा वचा ।
पाठा कोशातकी मूर्वा तिक्ता काकादनी तथा ॥ ८७ ॥
एषां कषायकल्काभ्यां सिद्धं पीतं घृतोत्तमम् ।
विशीर्यमाणविध्वस्तस्नायुकेशनखं नरम् ।
कुष्ठातुरं सदा कुर्यात्सुमूर्तिमपि निर्गदम् ॥ ८८ ॥

हारीतात्कुष्ठे आवर्तकीघृतम् ।

आवर्तकीमूलशतं सुशुद्धं क्वाथीकृतं कल्कपलाष्टयुक्तम् ।
प्रस्थं पुराणाद्धविषः सुगन्ध्यात् पक्वं शनैः साधु ततोऽवतार्य॥८९॥
मात्रां पिबेद्व्याधिबलानुरूपां भुञ्जीत चान्नं सह काञ्जिकेन ।
द्रवोत्तरं कोद्रवजं सुजीर्णे कामं पुरस्तादपरेऽह्नि शुद्धः ॥ ९० ॥
त्रिसप्तरात्रं विधिनैवमाशु पीतं निहन्यादचिरेण कुष्ठम् ।
सुवर्णं भग्ननखाङ्गदेहं मण्डलानुपूर्व्या विधिनाऽथ चैतत् ॥ ९१ ॥

अग्निवेशाद्गुदभ्रंशे चव्याद्यं घृतम् ।

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बरूणि च ।
यवानीं पिप्पलीमूलमुभे च विडसैन्धवे ॥ ९२ ॥
अभयां चित्रकं बिल्वं पिष्ट्वा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जले दध्नश्चतुर्गुणे ॥ ९३ ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ।
गुदवंक्षणशूलं च घृतमेतद्व्यपोहति ॥ ९४ ॥

भेडात्प्रमेहे धान्वन्तरं घृतम्।

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी।
वर्षाभूर्वरुणो दन्ती चित्रकः सपुनर्नवः॥ ९५॥
कपित्थोऽर्कस्नुधाक्षीरं बिल्वं भल्लातकानि च।
शटी पुष्करमूलं च पिप्पलीमूलमेव च॥ ९६॥
पृथग्दशपलान्येषां दत्त्वा तोयार्मणे पचेत्।
यवकोलकुलत्थानां प्रस्थं प्रस्थं प्रदापयेत्॥ ९७॥
तेन पादावशिष्टेन घृतप्रस्थं विपाचयेत्।
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली॥ ९८॥
शृङ्गवेरं विडङ्गानि वचा कम्पिल्लकस्तथा।
पिप्पली चविका चैव कुष्ठं च समभागतः।
गर्भेणानेन तत्सिद्धं पाययेद्धि यथाबलम्॥ ९९॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्ठं प्रमेहगुल्मांश्च श्वयथुं वातशोणितम्॥ १००॥
प्लीहानमुदरार्शांसि विद्रधिं पिडकास्तथा।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति॥ १०१॥

स्वरभेदात्कुमारकल्याणकं घृतम्।

शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह।
द्राक्षा सशर्करा शुण्ठी जीवन्ती जीवको बला॥ १०२॥
शटी दुरालभा बिल्वं दाडिमं सुरसा स्थिरा।
मुस्तं पुष्करमूलं च सूक्ष्मैला पिप्पली जलम्॥ १०३॥
श्वदंष्ट्राऽतिविषा पाठा विडङ्गं दारु मालती।
मधूकपुष्पखर्जूरं बदरं वंशरोचना॥ १०४॥
कल्कैरेषां समांशानां घृतं क्षीरचतुर्गुणम्।
कषाये कण्टकार्याश्च साधयेत्सौम्यदैवते॥ १०५॥

एतत्कुमारकल्याणं घृतरत्नं सुखप्रदम् ।
बलवर्णकरं धन्यं पुष्टयग्निरुचिकारकम् ॥ १०६ ॥
यांज्यं सर्वग्रहालक्ष्मीदन्तकर्णगदापहम् ।
सर्वबालामयघ्नं च मेध्यमायुष्यमुत्तमम् ॥ १०७ ॥
रसायनमिदं सेव्यं विशेषाद्दन्तजन्मनि ।

वाग्मयाद्ब्राह्मीघृतम् ।

द्वौ प्रस्थौ स्वरसाद्ब्राह्म्या घृतप्रस्थं च साधयेत् ॥ १०८ ॥
व्योषश्यामात्रिवृद्ब्राह्मीशङ्खपुष्पीनृपद्रुमैः ।
ससप्तलाविडङ्गाद्यैः कल्कितैरक्षसंमितैः ॥ १०९ ॥
पलवृद्ध्या प्रयुञ्जीत यावन्मात्रा चतुष्पलम् ।
हरेत्कुष्ठमपस्मारमुन्मादं च सुतप्रदम् ॥ ११० ॥
वाक्स्मृतिस्वरमेधाकृद्धन्यं ब्राह्मीघृतं शुभम् ।

शूले बीजपूरकाद्यं घृतम् ।

घृताच्चतुर्गुणो देयो मातुलुङ्गरसो दधि ॥ १११ ॥
शुष्कमूलककोलाम्लकषायो दाडिमाद्रसः ।
विडङ्गलवणक्षारयवानीपञ्चकोलकैः ॥ ११२ ॥
पाठामूलककल्कैश्च सिद्धं पूरकसंज्ञितम् ।
हृत्पार्श्वशूलवैस्वर्यहिध्माश्वासभगन्दरान् ॥ ११३ ॥
वर्ध्मगुल्मप्रमेहार्शोवातव्याधीन् विनाशयेत् ।

कृष्णात्रेयाद्व्रणे महागौर्यादि घृतम् ।

गौरी निशा च मञ्जिष्ठा मांसी कटुकरोहिणी ॥ ११४ ॥
प्रपौण्डरीकयष्ट्याह्वं भद्रमुस्तं सचन्दनम् ।
जातीनिम्बपटोलं च करञ्जं बीजमेव च ॥ ११५ ॥
कट्फलं समधूच्छिष्टं समभागानि कारयेत् ।
पञ्चवल्ककषायेण घृतप्रस्थं विपाचयेत् ॥ ११६ ॥
क्षीरद्विप्रस्थसंयुक्तं शनैर्मृद्वग्निना पचेत् ।
एतद्गौरं महावीर्यं सर्वव्रणविशोधनम् ॥ ११७ ॥

आगन्तुसहजाश्चैव शिरःश्लिष्टाश्च ये व्रणाः।
विषमामपि नाडीं च रोपयेच्छीघ्रमेव च ॥ ११८ ॥

रक्तपित्ते दूर्वाद्यं घृतम्।

दूर्वा चोत्पलकिञ्जल्कं मञ्जिष्ठा चैलवालुकम्।
श्वेतदूर्वा तथोशीरं मुस्ता चन्दनपद्मकम् ॥ ११९ ॥
द्राक्षा मधूकयष्ट्याह्वं काश्मरी सितचन्दनम्।
पिष्टैस्तैः कार्षिकैर्द्रव्यैर्घृतप्रस्थं विपाचयेत् ॥ १२० ॥
तण्डुलाम्बु त्वजाक्षीरं पृथग्दद्याच्चतुर्गुणम्।
तत्पानं वमतो रक्तं नावनं नासिकागते ॥ १२१ ॥
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत्।
चक्षुर्गते च रक्ते वै पूरयेत्तेन चक्षुषी ॥ १२२ ॥
मेढ्रपायुगते चापि बस्तिकर्म प्रयोजयेत्।
प्रवृत्ते रोमकूपेभ्यस्त्वभ्यङ्गे योजयेद्घृतम् ॥ १२३ ॥

वैदेहाभिनेत्ररोगे महात्रैफलं घृतम्।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च।
पीडयित्वा वृषं बालं रसप्रस्थं च दापयेत् ॥ १२४ ॥
अजाक्षीरस्य च प्रस्थं, प्रस्थं तैः सर्पिषः पचेत्।
त्रिफला चन्दनं द्राक्षा पिप्पली मधुकं बला ॥ १२५ ॥
काकोलीक्षीरकाकोलीमेदामरिचसैन्धवम्।
शर्करा पुण्डरीकं च हरिद्रोत्पलनागरम् ॥ १२६ ॥
कल्कैः सिद्धं भिषग्दद्यान्नेत्ररोगविनाशनम्।
काचं च नीलिकां शुक्रं वर्त्मरोगांश्च नाशयेत् ॥ १२७ ॥
नक्तान्ध्यं नकुलान्ध्यं च कण्डुं पिल्लमथापि च।
अजकां तिमिरांश्चैव नेत्रस्रावांश्च दारुणान् ॥ १२८ ॥
त्रिफलासर्पिरेतद्धि पाननावनतर्पणैः।
विदेहराजनिर्दिष्टं दृष्टिनैर्मल्यकारकम् ॥ १२९ ॥

---

१ 'चिरोत्थिताश्च'

शतावर्याद्यं शतावरीघृतम् ।

शतावरीमूलतुलां द्विद्रोणेऽपां विपाचयेत् ।
अष्टभागावशेषेण घृतप्रस्थं विपाचयेत् ॥ १३० ॥
जीवनीयानि सर्वाणि रास्ना गोक्षुरकस्तथा ।
शतपुष्पा वचा कुष्ठं सरलश्च पुनर्नवा ॥ १३१ ॥
चन्दनं तगरं मांसी पद्मकं रक्तचन्दनम् ।
सुरसा नागरं कृष्णा विडं मुस्ता तथोत्पलम् ॥ १३२ ॥
एषामक्षसमैर्भागैः क्षीरं दत्त्वा चतुर्गुणम् ।
बृंहणं वातपित्तघ्नं क्षतशोषज्वरापहम् ॥ १३३ ॥
पीठसर्पिमपङ्गूनामर्दितेऽपि च शस्यते ॥
पुंस्त्वोपघातिनां नृणां वन्ध्यानां चैव योजितम् ॥ १३४ ॥
बलवर्णकरं ह्येतदलक्ष्मीघ्नं प्रजाकरम् ।
इदं शतावरीसर्पिरश्विभ्यां परिकीर्तितम् ॥ १३५ ॥

शङ्खपुष्प्याद्यं घृतम् ।

( शङ्खब्राह्मीगुडूच्यग्निशतावर्यर्कवल्लिकाः ।
मल्पूं ब्रह्मसोमां च कल्कीकृत्य घृतं पचेत् ॥ १ ॥
दुग्धं चतुर्गुणं दत्त्वा वातश्लेष्महरं च तत् ।
मेधाकरं तथाऽऽयुष्यमश्विभ्यां परिकीर्तितम् ॥ २ ॥ )

सारस्वतं घृतम् ।

ब्राह्मीं समूलपत्रां तु सम्यक् प्रक्षाल्य वारिणा ।
उलूखलेन संक्षुद्य रसं वस्त्रेण गालयेत् ॥ १३६ ॥
चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ।
औषधानि च पेष्याणि तत्रेमानि प्रदापयेत् ॥ १३७ ॥
हरिद्रा मालती चैव त्रिफला च हरीतकी ।
एतेषां पालिका भागाः शेषाणां कार्षिकाः स्मृताः ॥१३८॥
पिप्पल्योऽथ विडङ्गानि सैन्धवं शर्करा वृषः ।
एतानि तु समालोड्य शनैर्मृद्वग्निना पचेत् ॥ १३९ ॥

ततः पक्वं तु विज्ञाय क्षिप्रं तदवतारयेत् ।
तस्य प्राशनमात्रेण बधिरत्वं प्रणश्यति ॥ १४० ॥
सप्तरात्रोपयोगेन भवेत्कविरसंशयम् ।
घृतं सारस्वतं नाम सरस्वत्या विनिर्मितम् ॥ १४१ ॥

सन्तानार्थं फलघृतम् ।

माञ्जिष्ठा मधुकं कुष्ठं त्रिफला शर्करा वचा ।
अजमोदा हरिद्रे द्वे हिङ्गु तिक्तकरोहिणी ॥ १४२ ॥
काकोली क्षीरकाकोली मूलं चैवाश्वगन्धजम् ।
जीवकर्षभकौ मेदे रेणुका बृहतीद्वयम् ॥ १४३ ॥
उत्पलं चन्दनं द्राक्षा पद्मकं देवदारु च ।
एषामक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ १४४ ॥
चतुर्गुणेन तोयेन विपचेन्मृदुनाऽग्निना ।
एतत्सर्पिर्नरः पीत्वा स्त्रीषु नित्यं वृषायते ॥ १४५ ॥
पुत्रं जनयते वीरं मेधाढ्यं पुष्करेक्षणम् ।
वन्ध्या च लभते गर्भं श्यामा शीघ्रं प्रसूयते ॥ १४६ ॥
या चैव स्थितगर्भा स्यान्मृतापत्या तु या भवेत् ।
अल्पायुर्जननी चैव या च मूत्वा पुनः स्थिता ॥ १४७ ॥
एतदेव कुमाराणां सर्वाङ्गग्रहमोक्षणम् ।
धन्यं यशस्यमायुष्यं कान्तिलावण्यपुष्टिदम् ॥ १४८ ॥
ये च कल्याणके प्रोक्तास्ते चापीह गुणाः स्मृताः ।
एतत्फलघृतं नाम ह्यश्विभ्यां परिकीर्तितम् ॥ १४९ ॥

अभिघातक्षतक्षीणे श्वदंष्ट्राद्यं घृतम् ।

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकत्तृणम् ।
पृश्निपर्णी स्थिरा दर्भमूलं च जीवकर्षभौ ॥ १५० ॥
पालिकान् साधयेत्तेषां रसे क्षीरचतुर्गुणे ।
कल्कैर्जीवकजीवन्तीस्वगुप्तामेदकर्षभात् ॥ १५१ ॥
शतावर्यृद्धिमृद्वीकाशर्कराश्रावणीविसात् ।

प्रस्थः सिद्धो घृताद्वातपित्तहृद्द्रवशूलनुत् ॥ १५२ ॥
मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः ।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ १५३ ॥

कामलायां हारीताद्द्राक्षाद्यं घृतम् ।

पिष्ट्वा गोस्तनिकायास्तु पलान्यष्टौ समावपेत् ।
पुराणसर्पिषः प्रस्थं पक्वं क्षीरे चतुर्गुणे ।
कामलापाण्डुरोगार्शोज्वरकासार्तिनाशनम् ॥ १५४ ॥

वाग्भटात्कुष्ठे महावज्रकं घृतम् ।

वासामृतानिम्बपटोलतिक्ताव्याघ्रीकरञ्जोदककल्कसिद्धम् ।
सर्पिर्विसर्पज्वरकामलार्तिकुष्ठापहं वज्रकमामनन्ति ॥ १५५ ॥

वाग्भटात्कुष्ठे महावज्रकं घृतम् ।

त्रिफलात्रिकटुद्विकण्टकारीकटुकाकुम्भनिकुम्भराजवृक्षैः ।
सवचातिविषाग्निकैः सपाठैः पिचुभागैर्नव वज्रदुग्धमुष्ट्याः ॥ १५६
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः क्रूरे कोष्ठे स्नेहनं रेचनं च ।
कुष्ठश्वित्रप्लीहवर्ध्माश्मगुल्मान्हन्यात्कृच्छ्रांस्तन्महावज्रकाख्यम् ॥

अग्निवेशात्कुष्ठे तिक्तकं घृतम् ।

निम्बपटोलं दार्वीं दुरालभां तिक्तरोहिणीं त्रिफलाम् ।
कुर्यादर्धपलांशं पर्पटकं त्रायमाणां च ॥ १५८ ॥
सलिलाढकसिद्धानां रसेऽष्टभागस्थिते क्षिपेत्पूते ।
चन्दनकिराततिक्तकमागधिकात्रायमाणाश्च ॥ १५९ ॥
मुस्तं वत्सकबीजं कल्कीकृत्यार्धकार्षिकान् भागान् ।
नवसर्पिषश्च षट्पलमेतत्सिद्धं घृतं पेयम् ॥ १६० ॥
कुष्ठज्वरगुल्मार्शोग्रहणीपाण्ड्वामयश्वयथुहारि ।
विसर्पपामापिडकाकण्डूमदगण्डनुत्तिक्तकम् ॥ १६१ ॥

अग्निवेशात्कुष्ठे महातिक्तकं घृतम् ।

सप्तच्छदं प्रतिविषां शम्याकं तिक्तरोहिणीं पाठाम् ।
मुस्तमुशीरं त्रिफलां पटोलपिचुमर्दपर्पटकम् ॥ १६२
धन्वयवासं चन्दनमुपकुल्यां पद्मकं हरिद्रे द्वे ।
षड्ग्रन्थां सविशालां शतावरीं सारिवे चोभे ॥ १६३ ॥

वत्सकबीजं वासां मूर्वाममृतां किराततिक्तं च।
कल्कीकुर्यान्मतिमान् षडङ्गं त्रायमाणां च ॥ १६४ ॥
कल्कश्चतुर्थभागो जलमष्टगुणं रसोऽमृतफलानाम्।
द्विगुणो घृतात्प्रदेयस्तत्सिद्धं पाययेत्सर्पिः ॥ १६५ ॥
कुष्ठानि रक्तपित्तमबलान्यर्शांसि रक्तवाहीनि।
वीसर्पमम्लपित्तं पित्तासृक् पाण्डुतां गुल्मम् ॥ १६६ ॥
विस्फोटकान् सपामानुन्मादं कामलां कृमीन् कण्डूम्।
हृद्रोगज्वररपिडका ह्यसृग्दरं गण्डमालां च ॥ १६७ ॥
हन्यादेतत्सद्यः पीतं काले यथाबलं सर्पिः।
योगशतैरप्यजितान्महाविकारान्महातिक्तम् ॥ १६८ ॥

अनुकर्णाकुष्ठे द्वितीयं महातिक्तकं घृतम्।

करञ्जसप्तच्छदपिप्पलीनां मूलानि कृष्णा मधुकं विशाला।
यवासकश्चन्दनमुत्पलं च स्यात्त्रायमाणा कटुका वचा च ॥१६९
उशीरपाठातिविषारजन्यः किराततिक्तः कुटजस्य बीजम्।
निम्बासनारग्वधमालतीनां पत्राणि मूलानि च कण्टकार्याः१७०
शतावरीपद्मकदेवदारुमुस्तानि कालीयककेसराणि।
वासागुडूचीनतसारिवाश्च बला पटोलं त्रिफला च मूर्वा ॥१७१
नीपः कदम्बो धववेतसौ च कर्कोटकः पर्पटकः पयस्या।
वाराहकन्दं मदयन्तिका च ब्राह्मी समङ्गर्षभको बला च ॥१७२
एतैः समांशैरथ कार्षिकैश्च घृतस्य पात्रं विपचेन्नवस्य।
द्रोणं जलस्याकलुषस्य दद्यात् पात्रद्वयं चामलकीरसस्य ॥१७३॥
पक्वं प्रशान्तं गतफेनशब्दं प्रयोजयेत् कुष्ठहरं प्रशस्तम्।
तद्रक्तपित्तानिलसन्निपातविस्फोटपाल्यामयविद्रधीनाम् ॥१७४॥
किलासकासज्वरगण्डमालाग्रन्थ्यर्बुदानि त्वथ वातरक्तम्।
हृत्पाण्डुरोगान् सभगन्दरांश्च निषेव्यमाणं नियमेन काले ॥१७५
घृतं महातिक्तमिदं प्रशस्तं निहन्ति सर्वान् क्षयधूपदिष्टान्।

१ 'मतिमान्' इति पा०। २ 'पाण्डुरोगं च' इति पा०। ३ ... इति पा०।

कृष्णात्रेयात् प्लीहि रोहीतकं घृतम् ।

शतं पलानि रोहीतात् संक्षुद्य बदराढकम् ।
पाचयित्वा जलद्रोणे चतुर्भागावशेषिते ॥ १७६ ॥
घृतप्रस्थं समावाप्य छागं क्षीरं चतुर्गुणम् ।
तस्मिन् दद्यादिमांश्चैव सर्वान् कर्षसमन्वितान् ॥१७७॥
व्योषं फलत्रयं हिङ्गु यवानी तुम्बुरु बिडम् ।
अजाजी सैन्धवं कुष्ठं दाडिमं देवदारु च ॥ १७८ ॥
पुनर्नवा विशाला च यवक्षारश्च पुष्करम् ।
विडङ्गं चित्रकश्चैव हपुषा चविका वचा ॥ १७९ ॥
एभिर्द्रव्यैर्घृतप्रस्थं स्थापयेद्भाजने शुभे ।
पाययेच्च पलं मात्रां व्याधीन् शमयते क्षणात् ॥ १८० ॥
प्लीहं प्लीहोदरं चैव प्लीहशूलं तथैव च ।
हृच्छूलं पार्श्वशूलं च कुक्षिशूलमरोचकम् ॥ १८१ ॥
हन्ति विबन्धशूलं च पाण्डुरोगं सकामलम् ।
छर्द्यतीसारशूलघ्नं तन्द्राज्वरविनाशनम् ॥ १८२ ॥
रोहीतकघृतं ह्येतत् प्लीहानं शमयेद्द्रुतम् ।

क्षारपाणेः प्लीहनि बिल्वाद्यं घृतम् ।

बिल्वं पाठाऽभया धान्यं यवानी सैन्धवं बिडम् ।
मरिचं पञ्चकोलं च क्षारैश्चाभिर्घृतं पचेत् ॥ १८३ ॥
दध्ना चतुर्गुणेनैव शकृद्वातविबन्धनुत् ।
सर्वाग्निप्लीहवातार्तिगुदभ्रंशरुजापहम् ॥ १८४ ॥

हारीतात् सर्वोदरे द्विपञ्चमूलाद्यं घृतम् ।

द्वे पञ्चमूल्यौ त्रिवृतानिकुम्भे ससप्तलं चित्रकशिग्रुमूलम् ।
क्षैरण्डबीजं[1] त्रिफला गुडूची क्षैरण्डमूलं मदयन्तिका च १८५
पाठा समार्गी सुपवी सनीला सरोहिषा पापकुचेलिका[2] च ।
एषां पृथक् पञ्चपलं जलस्य द्रोणे पचेत्तच्चतुरंशशेषम् १८६
घृतं विपक्वं सकषायकल्कं निहन्ति पीतं सकलोदराणि ।

१ 'करञ्जबीजं' इति पा०। २ 'पीनकुचेलिका' इति पा० ।

उदरे शार्ङ्गं घृतम् ।

शिलाह्वयं नागरकालशाके काकादनीमूलनिदग्धिके च ॥१८७
पञ्चैव दद्याल्लवणानि हिङ्गु कृष्णां च तैरक्षसमैः पृथक् च ।
प्रस्थं घृतस्याथ पचेन्नवस्य चतुर्गुणं मूत्रमथ प्रदाप्य ॥१८८॥
पयश्च दद्याद्द्विगुणं विपक्वं तद्ब्रह्मसृष्टं प्रवदन्ति सर्पिः ।
प्लीहोदरं दूष्यमथोदरं च संसेव्यमानं जठराणि हन्यात् ॥१८९॥

कासे कण्टकारीघृतम् ।

पाठाविडव्योषविडङ्गसिन्धुत्रिकण्टरास्नाहुतभुग्बलाभिः ।
भृङ्गीवचाम्भोधरदेवदारुदुरालभाभार्ग्यभयाशटीभिः ॥ १९० ॥
सम्यग्विपक्वं द्विगुणेन सर्पिर्निदग्धिकायाः स्वरसेन चैतत् ।
श्वासाग्निसादस्वरभेदभिन्नाग्निहन्त्युदीर्णानपि पञ्चकासान् १९१

कासे द्वितीयं कण्टकारीघृतम् ।

क्षुद्रायाः स्वरसं सम्यक् ग्राहयेद्यन्त्रपीडितम् ।
चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत् ॥ १९२ ॥
दद्यात्त्रिकटुकं गर्भे रास्नां गोक्षुरकं बलाम् ।
पञ्चकासानिदं सर्पिः पीतं सद्यो व्यपोहति ॥ १९३ ॥

अग्निवेशात् कासे ऽयूषणाद्यं घृतम् ।

ऽयूषणं त्रिफलां द्राक्षां काश्मर्यं च परूषकम् ।
द्वे पाठे देवदार्वृद्धिं स्वगुप्तां चित्रकं शटीम् ॥ १९४ ॥
व्याघ्रीमामलकीं मेदां काकनासां शतावरीम् ।
त्रिकण्टकं गुडूचीं च पिष्ट्वा कर्षसमं घृतात् ॥ १९५ ॥
प्रस्थं चतुर्गुणे क्षीरे सिद्धं कासहरं पिबेत् ।
ज्वरगुल्मारुचिप्लीहशिरोहृत्पार्श्वशूलनुत् ॥ १९६ ॥
कामलार्शोऽनिलाष्ठीलाक्षतशोषक्षयापहम् ।
ऽयूषणं नाम विख्यातमेतद्घृतमनुत्तमम् ॥ १९७ ॥

कृष्णात्रेयाद्व्रणे गौर्याद्यं घृतम् ।

गौरीनिम्बपटोलरोध्रफलिनीयष्ट्याह्वनीलोत्पलै-
र्मञ्जिष्ठाकटुकेन्द्रवारुणिजपामूर्वानिशाचन्दनैः ।

जातीक्षीरकपत्रकेशरदलैः पूतीकयोण्याफलै-
स्तुल्यैः सिक्थकसारिवाद्वययुतैर्गव्यं घृतं पाचयेत् ॥१९८॥
गृष्टिक्षीरसपञ्चवल्कलदलक्वाथैश्च गौर्यादिभिः
सिद्धं सर्पिरिदं हितं त्रिषु भवेत्सद्यःक्षतेषु ध्रुवम्।
ये गूढाश्चिरकालजातगतयः मोच्छिन्नमांसा व्रणाः
सस्रावाः सरुजः सदाहपिडिकाः शुष्यन्ति रोहन्ति च १९९

भेडाद्गुग्गुलुतिक्तकं घृतम्।

निम्बामृतापटोलानां कण्टकार्या वृषस्य च।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ २०० ॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
त्रिकटुत्रिफलामुस्तारजनीद्वयवत्सकम् ॥ २०१ ॥
शुण्ठी दारुहरिद्रा च पिप्पलीमूलचित्रकम्।
भल्लातको यवक्षारः कटुकाऽतिविषा वचा ॥ २०२ ॥
विडङ्गं स्वर्जिकाक्षारः शतपुष्पाऽजमोदकम्।
एषामक्षसमैर्भागैर्गुग्गुलोः पञ्चभिः पलैः ॥ २०३ ॥
सुसिद्धं पीयमानं च ह्येतद्गुग्गुलुतिक्तकम्।
विद्रधिं हन्ति सद्यो हि त्वग्दोषानपि दारुणान् ॥ २०४ ॥
कुष्ठानि स्वापसङ्कोचवेगघ्नन्ति स्थिराणि च।
वातश्लेष्मसमुत्थानि मेदःस्रावयुतानि च ॥ २०५ ॥
गण्डमालार्बुदग्रन्थिनाडीदुष्टभगन्दरान्।
कासं श्वासं प्रतिश्यायं पाण्डुरोगं ज्वरं क्षयम् ॥ २०६ ॥
विषमज्वरहृद्रोगलिङ्गदोषविषक्रिमीन्।
प्रमेहासृग्दरोन्मादशुक्रदोषगदान् जयेत् ॥ २०७ ॥

हारीतात्छोथे द्राक्षाद्यं घृतम्।

द्राक्षायाः शोधितं प्रस्थं मधुकस्य पलाष्टकम्।
पचेत्तोयार्मणे शुद्धे पादशेषेण तेन च ॥ २०८ ॥
पालिके मधुकद्राक्षे पिष्ट्वा कृष्णापलद्वयम्।

प्रदाप्य सर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम् ॥ २०९ ॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् ।
एतद्द्राक्षाघृतं नाम क्षीणक्षुतृड्सुखावहम् ॥ २१० ॥
वातपित्तज्वरश्वासविस्फोटकहलीमकान् ।
प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥ २११ ॥

विदेहात्सर्वनेत्ररोगे त्रिफलाद्यं घृतम् ।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च ।
पीडयित्वा वृषं वालं रसप्रस्थं प्रदापयेत् ॥ २१२ ॥
अजाक्षीरस्य च प्रस्थं कार्षिकैः श्लक्ष्णपेषितैः ।
पिप्पलीशर्कराद्राक्षात्रिफलानीलपद्मकैः ॥ २१३ ॥
मधुकक्षीरकाकोलीमधुपर्णीनिदिग्धिका-।
माञ्जिष्ठापद्मकोशीरसारिवादारुचन्दनैः ॥ २१४ ॥
घृतं प्रस्थं पचेत् प्राज्ञः कल्कैरेभिः समन्वितम् ।
ऊर्ध्वपानमधः पानं मध्ये पानं विशिष्यते ॥ २१५ ॥
अतिप्रदुष्टरक्ते च रक्ते चातिस्रुते तथा ।
नक्तान्ध्ये तिमिरे काचे सर्वनेत्ररुजासु च ॥ २१६ ॥
चर्कविधोतिते भ्रान्ते सूर्यतेजोद्विपे तथा ।
गृध्रदृष्टिकरं धन्यं बलवर्णाग्निवर्धनम् ॥
त्रिफलाया घृतं सिद्धं सर्वनेत्ररुजान्तकृत् ॥ २१७ ॥

पटोलाद्यं घृतम् ।

पटोलं मधुकं दार्वी निम्बं वासां फलत्रिकम् ।
दुरालभां च त्रायन्तीं पर्पटं च पलोन्मितम् ॥ २१८ ॥
प्रस्थमामलकानां च क्वाथयेत्सलिलार्मणे ।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २१९ ॥
कल्कैः कुटजभूनिम्बमुस्तयष्ट्याह्वचन्दनैः ।
पिप्पलीसहितैः सर्पिश्चक्षुष्यं श्रोत्रयोर्हितम् ॥ २२० ॥

१ 'दार्वीचन्दनैः' इति पा० । २ 'चक्रविधोतिते' इति पा० ।
३ 'कटुकां' इति पा० ।

जातीशोरकपत्रकेशरदलैः पूतीकघोण्टाफलै-
स्तुल्यैः सिक्थकसारिवाद्वययुतैर्गव्यं घृतं पाचयेत् ॥१९८॥
गृष्टिक्षीरसपञ्चवल्कलदलकाथैश्च गौर्यादिभिः
सिद्धं सर्पिरिदं हितं त्रिषु भवेत्सद्यःक्षतेषु ध्रुवम् ।
ये गूढाश्चिरकालजातगतयः मोच्छिन्नमांसा व्रणाः
सस्रावाः सरुजः सदाहपिडिकाः शुष्यन्ति रोहन्ति च १९९

मेदाद्गुग्गुलुतिक्तकं घृतम् ।

निम्बामृतापटोलानां कण्टकार्या वृषस्य च ।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ॥ २०० ॥
तेन पादावशेषेण घृतमस्थं विपाचयेत् ।
त्रिकटुत्रिफलामुस्तारजनीद्वयवत्सकम् ॥ २०१ ॥
शुण्ठी दारुहरिद्रा च पिप्पलीमूलचित्रकम् ।
भल्लातको यवक्षारः कटुकाऽतिविषा वचा ॥ २०२ ॥
विडङ्गं स्वर्जिकाक्षारः शतपुष्पाऽजमोदकम् ।
एषामक्षसमैर्भागैर्गुग्गुलोः पञ्चभिः पलैः ॥ २०३ ॥
सुसिद्धं पीयमानं च घेतद्गुग्गुलुतिक्तकम् ।
विद्रधिं हन्ति सद्यो हि त्वग्दोषानपि दारुणान् ॥ २०४ ॥
कुष्ठानि स्वापसङ्कोचवेगवन्ति स्थिराणि च ।
वातश्लेष्मसमुत्थानि मेदःस्रावयुतानि च ॥ २०५ ॥
गण्डमालार्बुदग्रन्थिनाडीदुष्टभगन्दरान् ।
कासं श्वासं प्रतिश्यायं पाण्डुरोगं ज्वरं क्षयम् ॥ २०६ ॥
विषमज्वरहृद्रोगलिङ्गदोषविषक्रिमीन् ।
प्रमेहासृग्दरोन्मादशुक्रदोषगदान् जयेत् ॥ २०७ ॥

हारीताच्छोषे द्राक्षाद्यं घृतम् ।

द्राक्षायाः शोधितं प्रस्थं मधुकस्य पलाष्टकम् ।
पचेत्तोयार्मणे शुद्धे पादशेषेण तेन च ॥ २०८ ॥
पालिके मधुकद्राक्षे पिष्ट्वा कृष्णापलद्वयम् ।

प्रदाप्य सर्पिषः प्रस्थं पचेत् क्षीरचतुर्गुणम् ॥ २०९ ॥
सिद्धे शीते पलान्यष्टौ शर्करायाः प्रदापयेत् ।
एतद्द्राक्षाघृतं नाम क्षीणक्षुतृड्सुखावहम् ॥ २१० ॥
वातपित्तज्वरश्वासविस्फोटकहलीमकान् ।
प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥ २११ ॥

विदेहास्सर्वनेत्ररोगे त्रिफलाद्यं घृतम् ।

त्रिफलाया रसप्रस्थं प्रस्थं भृङ्गरसस्य च ।
पीडयित्वा वृषं बालं रसप्रस्थं प्रदापयेत् ॥ २१२ ॥
अजाक्षीरस्य च प्रस्थं कार्षिकैः श्लक्ष्णपेषितैः ।
पिप्पलीशर्कराद्राक्षात्रिफलानीलपद्मकैः ॥ २१३ ॥
मधुकक्षीरकाकोलीमधुपर्णीनिदिग्धिका-।
मञ्जिष्ठापद्मकोशीरसारिवादारुचन्दनैः ॥ २१४ ॥
घृतं प्रस्थं पचेत् प्राज्ञः कल्कैरेभिः समन्वितम् ।
ऊर्ध्वपानमधः पानं मध्ये पानं विशिष्यते ॥ २१५ ॥
अतिप्रदुष्टरक्ते च रक्ते चातिस्रुते तथा ।
नक्तान्ध्ये तिमिरे काचे सर्वनेत्ररुजासु च ॥ २१६ ॥
वर्कविद्योतिते भ्रान्ते सूर्यतेजोद्विपे तथा ।
गृध्रदृष्टिकरं धन्यं बलवर्णाग्निवर्धनम् ॥
त्रिफलाया घृतं सिद्धं सर्वनेत्ररुजान्तकृत् ॥ २१७ ॥

पटोलाद्यं घृतम् ।

पटोलं मधुकं दार्वीं निम्बं वासां फलत्रिकम् ।
दुरालभां च त्रायन्तीं पर्पटं च पलोन्मितम् ॥ २१८ ॥
प्रस्थमामलकानां च क्वाथयेत्सलिलार्मणे ।
तेन पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २१९ ॥
कल्कैः कुटजभूनिम्बमुस्तयष्ट्याह्वचन्दनैः ।
पिप्पलीसहितैः सर्पिश्चक्षुष्यं श्रोत्रयोर्हितम् ॥ २२० ॥

१ 'दार्वीचन्दनैः' इति पा० । २ 'चक्रविद्योतिते' इति पा० ।
३ 'कटुकां' इति पा० ।

घ्राणकर्णाक्षिवर्त्मत्वग्दन्तरोगव्रणापहम्।
रक्तपित्तहरं स्वेदक्लेदपूयोपशोषणम् ॥ २२१ ॥
कामलाज्वरवीसर्पगण्डमालाहरं परम्।

कृष्णात्रेयाद्बिन्दुघृतम्।

त्रिवृतां त्रिफलां पाठां दन्तीं कटुकरोहिणीम् ॥ २२२ ॥
चतुरङ्गुलमज्जानं तथा च कटुकत्रयम्।
चित्रकं च बृहत्यौ च तथा च गजपिप्पलीम् ॥२२३॥
स्नुहीक्षीरं पलं दद्यात् घृतस्याष्टौ प्रदापयेत्।
यावतः स पिबेद्बिन्दून् तावद्वारान् विरिच्यते ॥ २२४॥
एतद्बिन्दुघृतं सिद्धमृषिभिः परिकीर्तितम्।

कृष्णात्रेयात्तन्त्रे महाबिन्दुघृतम्।

स्नुहीक्षीरपले द्वे च प्रस्थार्धं चैव सर्पिषः ॥ २२५ ॥
कम्पिल्लकपलं चैव शाणार्धं सैन्धवस्य च।
त्रिवृतायाः पलं चैव कुडवं धात्रिजाद्रसात् ॥ २२६ ॥
तोयप्रस्थेन संयुक्तं शनैर्मृद्वग्निना पचेत्।
कर्षमानं प्रदातव्यं जठरे प्लीहगुल्मयोः ॥ २२७ ॥
तथा कर्णोत्थरोगेषु युञ्जीत कुशलो भिषक्।
गुल्मादिनिचयानेतत् समूलान् सपरिग्रहान् ॥ २२८ ॥
निहन्त्येष प्रयोगो हि वायुर्जलधरानिव।
पञ्चगुल्मवधार्थाय सर्पिरेतत् प्रकीर्तितम् ॥ २२९ ॥
सर्वासुरवधार्थाय यथा वज्रं बिडौजसः।
महाबिन्दुघृतं सिद्धं सर्वोदरहरं परम् ॥ २३० ॥

गुल्मे बिन्दुघृतम्।

श्यामात्रिवृद्द्विपलत्रयं हि हरीतकीनां तु शतार्धमन्यत्।
तोयार्मणोऽर्धेन विपाच्य तेन प्रस्थं पचेद्गव्यघृतस्य वैद्यः२३१
कम्पिल्लकस्यापि पलप्रमाणं सनीलिनीबीजपलद्वयं च।
चतुष्पलं स्नुक्पयसश्च दत्त्वा गुल्मापहं बिन्दुघृतं विरेकात् २३२

---

१ 'कम्पिल्लकस्य प्रसृतिप्रमाणं' इति पा०।

चिकित्साकलिकाया गुल्मे महाबिन्दुघृतम् ।

त्रिवृत्पलं स्नुक्पयसः पलं च कम्पिल्लकस्यापि पलं तृतीयम् ।
चतुष्पलं चामलकीरसस्य पलार्धमन्यल्लवणस्य चैव ॥ २३३ ॥
प्रस्थार्धमेभिर्हविषो विपक्वं जले महाबिन्दुघृतं प्रसिद्धम् ।
निहन्ति गुल्मं जठराणि चैव प्लीहामयानाशु विरेकयोगात् २३४

कुष्ठे बिन्दुघृतम् ।

अर्कक्षीरपले द्वे तु स्नुहीक्षीरपलानि षट् ।
पथ्या कम्पिल्लकः श्यामा श्यामाको गिरिकर्णिका ॥२३५॥
नीलिनी त्रिवृता दन्ती शङ्खिनी चित्रकस्तथा ।
एतेषां पलिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ २३६ ॥
अथास्य मलिने कोष्ठे बिन्दुमात्रं प्रदापयेत् ।
यावतो वा पिबेद्बिन्दून् तावद्वारान्विरिच्यते ॥ २३७ ॥
कुष्ठं गुल्ममुदावर्तं श्वयथुं सभगन्दरम् ।
शमयत्युदराण्यष्टौ वृक्षमिन्द्राशनिर्यथा ॥ २३८ ॥
एतद्बिन्दुघृतं नाम येनाभ्यक्तो विरिच्यते ।

कुष्ठे पञ्चतिक्तकं घृतम् ।

निम्बं व्याघ्रीं पटोलं च गुडूचीं वासकं तथा ॥ २३९ ॥
कुर्यात्तुलां तु संचूर्ण्य क्वाथयेत्तज्जले शुभे ।
ततः पादावशेषेण घृतप्रस्थं विपाचयेत् ॥ २४० ॥
त्रिफलागर्भसंयुक्तं पञ्चतिक्तकमुच्यते ।
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ॥ २४१ ॥
विंशतिं श्लेष्मजांश्चैव पानादेवापकर्षति ।
(दुष्टव्रणांस्तथा नाडीमर्शांसि च भगन्दरम् ।
पञ्चकासान् सहृद्रोगान् सर्पिरेतन्नियच्छति ॥)

खरनादाच्छूले लशुनघृतम् ।

प्रस्थं लशुनबीजानां कण्टकार्यास्तथैव च ॥ २४२ ॥
प्रस्थं तथा च वासाया जलद्रोणे विपाचयेत् ।

द्राक्षाया गोस्तनायाश्च कुडवं चात्र मिश्रयेत् ॥ २४३ ॥
तत्र दद्याद्घृतप्रस्थं गोक्षीरप्रस्थमेव च ।
लशुनस्य तु पिष्टस्य पलं निंष्पीड्य योजयेत् ॥ २४४ ॥
आटरूपकपत्राणां पेषयित्वा पलं तथा ।
एतन्मृद्वग्निना सिद्धं शीतं पूतमथापि च ॥ २४५ ॥
द्विपलं शर्कराचूर्णं क्षीरार्धकुडवं तथा ।
त्वक्क्षीर्याश्च पलार्धं हि तत्सर्वं खजमूर्च्छितम् ॥ २४६ ॥
निदध्याद्भाजने शुद्धे काञ्चने राजतेऽपि वा ।
एतत्प्रायोगिकं सर्पिरिमान् व्याधीन् व्यपोहति ॥ २४७ ॥
कासं श्वासं ज्वरं गुल्मं कार्श्यं छर्दिमरोचकम् ।
हृद्रोगं पार्श्वशूलं च क्षतक्षीणं प्लिहोदरम् ॥ २४८ ॥
जीवनं बृंहणं वृष्यं पाण्डुक्षयपशुनाशनम् ।

तन्त्रान्तरात्दाडिमाद्यं घृतम् ।

दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम् ॥ २४९ ॥
चित्रकाच्छृङ्गवेराच्च पिप्पल्यष्टमिका च तैः ।
पलानि विंशतिं चैव घृतस्य सलिलाढके ॥ २५० ॥
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातार्तिशूलनुत् ।
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ॥ २५१ ॥
दुःखप्रसविनीनां च वन्ध्यानां चैव पुत्रदम् ।

चित्रकाद्यं घृतम् ।

चित्रकस्य तुलाक्काथे घृतप्रस्थं विपाचयेत् ॥ २५२ ॥
द्विगुणं धारनालं च दधिमण्डं चतुर्गुणम् ।
पञ्चकोलकतालीसक्षारैर्लवणसंयुतैः ॥ २५३ ॥
द्विजीरकनिशायुग्मैर्मरिचं तत्र दापयेत् ।
गुल्मप्लीहोदराध्मानपाण्डुरोगारुचिज्वरान् ॥ २५४ ॥

१ 'मात्राधिकाप्रस्थम्' इति पा० । २ 'पल द्राक्षापलं तथा' इति पा०
३ प्रायोगिकमिति प्रयोगः स्वस्थस्य सततोपयोगः, तत्र साधु प्रायोगिकम् ।

वस्तिहृत्पार्श्वकटयूरुशूलोदावर्तजान् गदान् ।
निहन्यात् पीतमर्शोघ्नं पाचनं वह्निदीपनम् ।
बलवर्णकरं चापि भस्मकं च नियच्छति ॥ २५५ ॥

शोफे चित्रकाद्यं घृतम् ।

सचित्रकं धान्ययवान्यजाजीसौवर्चलव्यूषणवेतसाम्लम् ।
बिल्वोत्पलं दाडिमयावशूकं सपिप्पलीमूलमथापि चव्यम् २५६
पिष्ट्वाऽक्षमात्राणि जलाढकेन पक्त्वा घृतप्रस्थमथापि युञ्ज्यात् ।
अर्शांसि गुल्मान् श्वयथुं सकृच्छ्रं निहन्ति वह्निं च करोति दीप्तम् ॥

प्लीहि तृतीयं रोहीतकघृतम् ।

रोहीतकत्वचः श्रेष्ठात्पलानां पञ्चविंशतिम् ।
कोलद्विप्रस्थसंयुक्तां कषायमुपकल्पयेत् ॥ २५८ ॥
पालिकैः पञ्चकोलैश्च तैः सर्वैश्चापि तुल्यया ।
रोहीतकत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ॥ २५९ ॥
शमयेत् प्लीहवृद्धिं च सर्पिराशु प्रयोजितम् ।
तथा गुल्मज्वरश्वासकृमिपाण्डुत्वकामलाः ॥ २६० ॥

कुष्ठे गुग्गुलुमतिक्तकं घृतम् ।

निम्बामृताद्वृषपटोलनिदिग्धिकानां
भागान्पृथग्दशपलान्विपचेद्धटेऽपाम् ।
अष्टांशशेषितसृतेन पुनश्च तेन
प्रस्थं घृतस्य विपचेत् पिचुभागकल्कैः ॥ २६१ ॥
पाठाविडङ्गसुरदारुगजोपकुल्या-
द्विक्षारनागरनिशामिशिचव्यकुष्ठैः ।
तेजस्वतीमरिचवत्सकदीप्यकाग्नि-
रोहिण्यरुष्करवचाकणमूलयुक्तैः ॥ २६२ ॥
मञ्जिष्ठयाऽतिविषया विषया यवान्या
संशुद्धगुग्गुलुपलैरपि पञ्चसंख्यैः ।

१ 'शोथघ्नं' इति पा० । २ 'रसेन' इति पा० ।

तत्सेवितं विधुवति प्रबलं समीरं
सन्ध्यस्थिमज्जगतमप्यथ कुष्ठमीदृक् ॥ २६३ ॥
नाडीव्रणार्बुदभगन्दरगण्डमाला-
जत्रूर्ध्वसर्वगदगुल्मगुदोत्थमेहान् ।
यक्ष्मारुचिश्वसनपीनसशोफकास-
हृत्पाण्डुरोगमदविद्रधिवातरक्तम् ॥ २६४ ॥

शीतकल्याणकं घृतम् ।

कुमुदं पद्मकोशीरं गोधूमा रक्तशालयः ।
मुद्गपर्णी पयस्या च काश्मरी मधुयष्टिका ॥ २६५ ॥
बलातिबलयोर्मूलमुत्पलं तालमस्तकम् ।
विदारी शतपत्री च शालपर्णी स जीवकः ॥ २६६ ॥
फलं त्रपुसबीजानि मत्स्यग्रं कदलीफलम् ।
एषामर्धपलान् भागान् गव्यं क्षीरं चतुर्गुणम् ॥ २६७ ॥
पानीयं द्विगुणं दत्त्वा घृतप्रस्थं विपाचयेत् ।
मदरे रक्तगुल्मे च रक्तपित्ते हलीमके ॥ २६८ ॥
बहुरूपे च यत्पित्तं कामलां च सशोणितम् ।
अरोचके ज्वरे जीर्णे पाण्डुरोगे मदे भ्रमे ॥ २६९ ॥
तरुणाश्चानपत्या ये या च गर्भं न विन्दति ।
अहन्यहनि च स्त्रीणां भवति प्रीतिवर्धनम् ॥ २७० ॥
शीतकल्याणकं नाम परमुक्तं रसायनम् ।

हिक्काश्वासे शट्याद्यं घृतम् ।

शटीवचाऽभया कुष्ठं पिप्पली बिल्वशुण्ठिका ॥ २७१ ॥
पलांशं सैन्धवं चव्यं तेजस्वत्यथ पुष्करम् ।
सौवर्चलं च भूधात्री भूतीकं चाक्षसंमितम् ॥ २७२ ॥
हिङ्ग्वर्धकर्षकोपेतं घृतप्रस्थं विपाचयेत् ।
चतुर्गुणं जलं चात्र दत्त्वा मृद्वग्निना भिषक् ॥ २७३ ॥
ग्रहण्यर्शोहितं कासहिक्कोरःपार्श्वशूलनुत् ।
श्वासान् सन्धिगतांश्चान्यान् हन्याद्वातकफामयान् ॥२७४

नारसिंहं घृतम् ।

वह्निर्भल्लातकं चैव शिंशपा खदिरस्तथा ।
हरीतकी विडङ्गानि जविकश्च तथाऽक्षकः ॥ २७५ ॥
एषामाहृत्य भागांस्तु सम्यग्दशपलोन्मितान् ।
जलद्रोणयुतान् कृत्वा लोहभाण्डे निधापयेत् ॥ २७६ ॥
लोहभाण्डे पचेत्तावद्यावत्पादावशेषितम् ।
क्वाथं लोहस्थितं कृत्वा स्थापयेद्दिवसत्रयम् ॥ २७७ ॥
त्रिगुणं तु शतावर्या रसं धात्र्याश्च निःक्षिपेत् ।
निःक्षिपेत्त्रिगुणं चात्र भृङ्गराजरसं शुभम् ॥ २७८ ॥
छागक्षीरं च तत्रैव त्रिगुणं च सुयोजयेत् ।
पक्त्वा घृताढकं तेन मधुना सितयाऽथवा ॥ २७९ ॥
गुडेन वा पिबेत्सार्धं केवलं वा पलोन्मितम् ।
न किंचित्परिहार्यं स्याद्वातातपनिषेविणाम् ॥ २८० ॥
अजीर्णे पिबतश्चापि वनितासेविनस्तथा ।
नान्धता नाग्निहानिश्च न वलीपलितं भवेत् ॥ २८१ ॥
अनेन च भवत्याशु नरः सिंहपराक्रमः ।
भवत्यश्वजवश्चैव हेमवर्णश्च जायते ॥ २८२ ॥
कान्ताऽपि सेविता तेन गुणैरेतैश्च युज्यते ।
नारसिंहमिति ख्यातं घृतं बलविवर्धनम् ॥ २८३ ॥

शिवेऽमृतं घृतम् ।

शिरीषस्य त्वचा व्योषं त्रिफला चन्दनोत्पलम् ।
द्वे बले सारिवास्फोटासुरभीनिम्बपाटलाः ॥ २८४ ॥
बन्धुजीवातसीमूर्वावासासुरसवत्सकम् ।
पाठाङ्कोलाश्वगन्धार्कमूलं यष्ट्याह्वपद्मके ॥ २८५ ॥
विशाला बृहती द्राक्षा कोविदारः शतावरी ।
कटभीदन्त्यपामार्गपृश्निपर्णीरसाञ्जनम् ॥ २८६ ॥

१ 'निषेवणम्' इति पा० । २ 'नरसिंहवपुर्नरः' इति पा० ।

शणाश्वखुरकौ श्वेतौ कुष्ठं दारु मिपङ्क्तुका ।
विदारी मधुकात्सारः करञ्जस्य फलं वचा ॥ २८७ ॥
रजन्यौ लोध्रमक्षांशान् पिष्ट्वा साध्यं घृताढकम् ।
तुल्याम्बुच्छागगोमूत्रे स्याढके तद्विपाचितम् ॥ २८८ ॥
अपस्मारक्षयोन्मादभूतग्रहगरोदरान् ।
पाण्डुरोगान् क्रिमीन् मेहान् सप्लीहोदरकामलान् ॥ २८९ ॥
हनुस्तम्भग्रहार्दांश्च पानाभ्यञ्जननावनैः ।
हन्यात्संजीवयेच्चापि विषोदधिमृतान्नरान् ॥ २९० ॥
अभेयममृतं सर्वविषाणां स्यादमृतोत्तमम् ।

महद्ग्रहणीमिहिरघृतम् ।

चतुष्पलं चव्यकचित्रपाठातेजस्विनीपिप्पलीमूलभेदाः ।
दद्याच्च मुस्तात्रिफलं विशुद्धं मुष्टिं समग्रामथ पल्लवानाम् ॥२९१
आस्फोटजातीपिचुसप्तपर्णपटोलशाखोटकनक्तमालात् ।
एतानि दद्यादथ कुट्टितानि ह्यधिश्रयेत्ताम्रमये कटाहे ॥२९२॥
सुकाथितं द्रोणजले तु सम्यक् पादावशिष्टं पुनरुद्धरेत्तत् ।
पलार्धतुल्याऽतिविषा सुभद्रा कल्कीकृतानि द्विपलानि दद्यात् ॥
सयावशूकं बिडसैन्धवं च पलानि चत्वारि च पिप्पलीनाम् ।
कल्कैः कषायेण च सिद्धमेतन्मृद्वग्निसिद्धं ह्यवतारयेच्च ॥२९४॥
पिबेच्च जीर्णे तु घृतस्य कर्षं विष्टम्भदोषे द्विगुणं पिबेच्च ।
अनेन सर्वे ग्रहणीविकाराः शाम्यन्ति गुल्माश्च बहुप्रकाराः२९५
सर्वाः कृमीणामथ जातयश्च शाम्यन्ति सम्यग्विविधप्रयोगात् ।
पाण्ड्वामयप्लीहगरोद्भवाश्च रोगा न तं भाविन आपतेयुः ॥२९६॥
सेवेत मद्यं पिशितानि चैव विवर्जकः स्यान्मधुतर्पणस्य ।
नाम्ना तदप्यग्निघृतं प्रसिद्धं वह्निं च संदीपयते प्रसह्य ॥२९७॥

---

१ 'एषो' इत्यध्याहारः । २ नामैकदेशेनापि नामग्रहणात् पिचुशब्देनात्र पिचुमर्दो गृह्यते ।

ग्रहण्यां भल्लातकाद्यं घृतम्।

भल्लातकानां द्विपलं पलांशं विदारिगन्धादिकपञ्चमूलम्।
जलाढके जर्जरितं विपाच्य विस्राव्य पूतं विपचेद्धि कल्कैः२९८
रास्ना विडं सैन्धवयावशूकं विडङ्गकृष्णामधुकं वचा च।
सविश्वकर्पूरहुताशहिङ्गु रास्नादिभिः पाणितलप्रमाणैः ॥२९९॥
प्रस्थं विपक्वं पयसा समांशं घृतस्य योज्यं कफजे विकारे।
प्लीहोदरे यक्ष्मणि वातरोगे श्वासे सकासे च हितं वदन्ति ३००
व्यापन्नवह्नौ कफगुल्मिनां च कण्डूविकारेषु च शस्तमेतत्।
भल्लातकाख्यं नियमेन पीतं जयेच्च सर्वान् ग्रहणीविकारान् ३०१

जीर्णज्वरे पिप्पल्याद्यं घृतम्।

पिप्पल्यतिविषाद्राक्षासारिवाबिल्वचन्दनैः।
कटुकेन्द्रयवोशीरशटीतामलकीघनैः॥ ३०२ ॥
त्रायमाणास्थिराधात्रीविश्वभेषजचित्रकैः।
कल्कैरेतैर्घृतं पक्वं विच्छिद्य विषमाग्निताम्॥ ३०३ ॥
जीर्णज्वरशिरःशूलगुल्मोदरहलीमकम्।
क्षयकासान् ससंतापान् पार्श्वशूलमपास्यति ॥ ३०४॥

मायूरघृतम्।

हेमन्तकाले शिशिरे च सेव्यं वसन्तकाले च मयूरसर्पिः।
औष्ण्याद्धि बर्ही विषभक्षणाच्च वर्षाशरद्ग्रीष्मदिनान्यपास्य ३०५
आहारजातं हि विहङ्गमस्य कीटाश्च सर्पाश्च सरीसृपाश्च।
पिपीलिकामत्कुणमक्षिकाश्च तेनोष्णकालेष्वहितो मयूरः ३०६
तथैव काले जलदाभिरामे विसृज्य शुक्रं च मदं च बर्ही।
कृशत्वमायाति हि हीनतां च शरन्मुखे तेन विवर्जनीयः ३०७
अथाऽऽहरेत्त्वस्यमृतं वयस्थं निस्तुण्डपत्रान्त्रनखं मयूरम्।
द्विद्रोणमात्रे पयसो निधाय विपाचयेद्भेषजसंप्रयुक्तम् ॥३०८॥
सश्रावणी ह्यंशुमती यवासः काकोली मेदे ऋषभो वयस्था।
सविश्वदेवा सहदेवसाह्वा सप्तच्छदान्मूलफले बला च॥३०९॥

१ '० कर्चूर ०' इति पा० २ 'सिंही' इति

शतावरीजीवकसोमवल्कमेकैकशः स्युः पलसंमिताश्च ।
ततोऽर्धशिष्टे क्वथिते सुपूते घृताढकं तत्र पुनर्विपाच्यम्॥३१०॥
एभिस्तु कल्कैः खलु कर्षमानैर्द्रोणेन दुग्धस्य युतैः सुपिष्टैः ।
मुञ्जातकाक्षोडमथात्मगुप्ता वृद्धिस्तया तामलकी सवीरा ३११
प्रियालमज्जा मधुकं तथैव सिद्धं प्रशान्तं गतफेनशब्दम् ।
पानेषु भोज्येषु च देयमेतद्भक्तेषु नानाप्रभवेषु चैव ॥ ३१२ ॥
मन्दाग्निरेतोविषपीडिताश्च क्षीणक्षताश्चापि कृशातिवृद्धाः ।
कासार्दिताः शोणितपित्तिनश्च पिबेयुरेते शिखिसर्पिरग्र्यम् ३१३
वृष्यं च बल्यं च रसायनं च सर्वेन्द्रियाणां बलवर्धनं च ।
ओजःस्वरं प्रीणयते च गात्रं विषघ्नमेतज्ज्वरनाशनं च ॥ ३१४॥
एतेन वृद्धाः कृशदुर्बलाश्च तथैव योगध्वसमाहताश्च ।
प्रक्षीणवीर्याश्च रतिप्रसक्ताः स्त्रियः समागम्य वृषीभवन्ति ३१५
हिमव्यपाये हिमदग्धपल्लवाः पुनः प्ररोहन्ति यथा महीरुहाः ।
पुनस्तथा यौवनपुष्टिमन्तो नरा भवन्तीह घृतप्रयोगात्॥३१६॥

तिमिरे जीवन्त्याद्यं घृतम्

तुलां पचेद्धि जीवन्त्या द्रोणेऽपां पादशेषिते ।
दत्त्वा चतुर्गुणं क्षीरं घृतप्रस्थं विपाचयेत् ॥ ३१७ ॥
प्रपौण्डरीककाकोलीपिप्पलीरोध्रसैन्धवैः ।
शताह्वामधुकद्राक्षासितादारुफलत्रयैः ॥ ३१८ ॥
कार्षिकैर्निशि तत्पीतं तिमिरापहरं परम् ।

अपस्मारे पञ्चगव्यं घृतम्

दशमूलेन्द्रवृक्षत्वङ्मूर्वाभार्गीफलत्रयैः ।
शम्याकश्रेयसीसप्तपर्णापामार्गफल्गुभिः ॥ ३१९ ॥
शृतैः कल्कैश्च भूनिम्बत्रिफलाव्योपचित्रकैः ।
त्रिवृत्पाठानिशायुग्मसारिवाद्वयपौष्करैः ॥ ३२० ॥
कटुकायासदन्त्युग्रानीलिनीक्रिमिशत्रुभिः ।
सर्पिरेभिश्च गोक्षीरदधिमूत्रशकृद्रसैः ॥ ३२१ ॥

१ 'माराद्य०' इति पा० ।

साधितं पञ्चगव्याख्यं सर्वापस्मारभूतनुत् ।
चतुर्थकक्षयश्वासानुन्मादांश्च नियच्छति ॥ ३२२ ॥

ज्वरे महापञ्चगव्यं घृतम् ।

दशमूलमपामार्गं त्रिफलां कुटजत्वचम् ।
सप्तपर्णं हरिद्रे द्वे नीलिनीं कटुरोहिणीम् ॥ ३२३ ॥
शुष्ककारग्वधे चैव फल्गुमूलं दुरालभाम् ।
पलांशकान्यपां द्रोणे साधयेत्पादशेषिते ॥ ३२४ ॥
त्रिवृतानिचुले भार्गी श्रेयसी मदयन्तिका ।
पूतिको रोहिषः पाठा दन्ती वह्निस्तथाऽऽढकी ॥३२५॥
किराततिक्तको मूर्वा व्योषं द्वे चापि सारिवे ।
सकषायं घृतमस्थमेभिः पिष्टैः विपाचयेत् ॥३२६॥
गव्यं शकृद्रसं क्षीरं तक्रं मूत्रं तथा दधि ।
तदैकध्यं पचेत्सर्पिः सिद्धं चैवावतारयेत् ॥३२७॥
पञ्चगव्यं महच्चैतद्विख्यातममृतं यथा ।
चातुर्थिकं ज्वरं हन्ति मन्त्रसिद्धो मुनिर्यथा ॥ ३२८ ॥
श्वयथुं पाण्डुरोगं च प्लीहार्शांसि भगन्दरम् ।
उदराणि तथा गुल्मं कामलां चापकर्षति ॥ ३२९ ॥
तस्माद्भिषक् प्रयुञ्जीत विधियुक्तं प्रयोगवित् ।

बिन्दुसारं घृतम् ।

शतावरीबलारास्नादशमूलीत्रिकण्टकान् ।
अश्वगन्धासमायुक्तान् कुशकाशसमन्वितान् ॥ ३३० ॥
दर्भेक्षुमूलसंयुक्तान् शरमूलविमिश्रितान् ।
मण्डूक्या च समायुक्तान् द्विपञ्चपलिकान् भिषक् ३३१
पुनर्नवायाः श्वेतायाः शिफां पलशतोन्मिताम् ।
जलद्रोणे प्रयत्नेन पचेत्सम्यक् चतुर्गुणे ॥ ३३२ ॥
निःस्राव्य पादशेषे तु क्वाथमग्रावधिश्रयेत् ।

यवानीपिप्पलीद्राक्षाशुण्ठीयष्ट्याह्वसैन्धवान् ॥ ३३३ ॥
द्विपालिकान् विनिःक्षिप्य श्लक्ष्णं पिष्ट्वा विधानतः ।
घृतप्रस्थं पचेत्सम्यक् क्षीरप्रस्थद्वयान्वितम् ॥ ३३४ ॥
प्रस्थेनैरण्डतैलेन गुडत्रिंशत्पलैर्युतम् ।
एतदीश्वरपुत्राणां राज्ञां चैव विशेषतः ॥ ३३५ ॥
स्त्रीसंभोगरतानां च मारभोजनमनिन्दितम् ।
ऊरुशूले कटिस्तम्भे योनिशूले च दारुणे ॥ ३३६ ॥
वस्तिवाते मत्रूद्धे च वातरोगे सुदुःसहे ।
घृतमेतत्प्रशंसन्ति सुकुमारे रसायनम् ॥ ३३७ ॥

कासे दशमूलाद्यं घृतम् ।

दशमूल्याढके प्रस्थं घृतस्याक्षसमैः पचेत् ।
पुष्कराह्वशटीबिल्वसुरसाव्योषहिङ्गुभिः ॥ ३३८ ॥
पेयं पथ्योनुपानं तत्कासे वातकफात्मके ।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च ॥ ३३९ ॥

रक्तपित्ते कट्वाद्यं घृतम् ।

कटुरोहिणिका मुस्ता हरिद्रा वत्सको बला ।
पटोलं चन्दनं मूर्वा त्रायमाणा दुरालभा ॥ ३४० ॥
पिप्पली पर्पटश्चैव भूनिम्बो देवदारुकम् ।
एतैरक्षमितैः सर्पिःप्रस्थं क्षीराढके पचेत् ॥ ३४१ ॥
रक्तपित्तं ज्वरं दाहं श्वयथुं सभगन्दरम् ।
अर्शांस्यसृग्दरं चैव हन्याद्विस्फोटकांस्तथा ॥ ३४२ ॥

गुल्मे दाधिकं घृतम् ।

सुपर्वी पञ्चमूल्यौ द्वे साश्वगन्धा पुनर्नवा ।
काला छिन्नरुहा चैव रास्ना गोक्षुरको बला ॥ ३४३ ॥
शटी पुष्करमूलं च देवदारुस्तथैव च ।
एषां द्विपलिकान् भागान् जलद्रोणे विपाचयेत् ॥३४४॥

---

१ 'पेयानुपानं' इति पा० ।

गलरोगे पिप्पल्यादिक्षारगुटिका ।

कर्षमेकं तु पिप्पल्या मरिचानां तथैव च ।
दाडिमस्य पलार्धं च गुडस्य च पलद्वयम् ॥ १५१ ॥
यवक्षारार्धकर्षं च गुटिकां कारयेद्भिषक् ।
मुखेन धारिता हन्ति कासश्वासगलामयान् ॥ १५२ ॥

कफरोगे वत्सनाभाद्या गुटिका ।

वत्सनाभवल्लयुगं पड्वल्लास्त्रिकटुकचूर्णस्य ।
चित्रकवल्लद्वितयं पिप्पलीमूलस्य वल्लयुगम् ॥ १५३ ॥
अभया द्वादशवल्ला द्वादशद्विगुणा च गुग्गुलोर्वल्लाः ।
गुटिका धार्या वदने क्षणदायां कफविनाशार्थम् ॥ १५४॥

त्रिकट्वाद्या गुटिका ।

त्रिकटुत्रिफलादुरालभाद्विनिशादारुवचाः सचित्रकाः ।
रसगन्धककर्कटाह्वया रुचककट्फलहिङ्गुपत्रिकाः ॥ १५५॥
इति दर्शितभेषजैर्गुटी मधुना कर्षमिता कृता नृणाम् ।
प्रणिहन्ति निषेविता प्रगे पवनासृक्कफकोपजामयान् ॥१५६ ॥

भार्ग्यादिगुटिका ।

भार्गी सकृष्णा द्विनिशेन्दुकान्तापथ्याबिभीतत्वचकुष्ठविश्वाः ॥
कन्यारसेनापि गुटिर्विधेया सश्वासकासामरुचिं निहन्ति १५७

ज्वरे त्रिवृताद्यो मोदकः ।

त्रिवृतापिप्पलीयुक्तो गुडसर्पिर्विभावितः ।
मण्डानुपानो देयोऽयं मोदकः सन्निपातहा ॥ १५८ ॥

काम्पिल्लकाद्यो मोदकः ।

कम्पिल्लकत्रिवृत्कृष्णापथ्यानागरकैरपि ।
सितागुडयुतो ह्येष मोदको ज्वरिणां हितः ॥ १५९ ॥
शीतानुपानतश्छर्दितृष्णापित्तामयान् जयेत् ।

त्रिफलाद्यो मोदकः

त्रिवृतार्धवराव्योषशर्करागुडसंयुतम् ॥ १६० ॥

मोदकं भक्षयित्वा तु पिबेच्चोष्णं जलं पुनः ।
पार्श्वशूलेऽरुचौ कासे ज्वरे चानिलसंभवे ॥ १६१ ॥

ज्वरे सप्तलाद्यो मोदकः ।

सप्तला पिप्पलीमूलं श्यामा दन्ती पृथक्पृथक् ।
एषां दशपलान् भागान् दशमूल्यास्तुलां तथा ॥१६२॥
हरीतक्यक्षधात्रीणां प्रस्थं प्रस्थं समावपेत् ।
जलद्रोणद्वये पक्वं पूतं पादावशेषितम् ॥१६३॥
विडङ्गं मुस्तकं श्यामां शङ्खिनीं मालतीमपि ।
त्रिवृद्व्योषयुतं ह्येतत्कृत्वा चूर्णं रसे क्षिपेत् ॥ १६४ ॥
वटकानक्षमात्रांस्तु वातश्लेष्मकृते ज्वरे ।
शूले पक्वाशयस्थे च शुद्ध्यर्थं भक्षयेदिमान् ॥ १६५ ॥

भ्रमे कृष्णाद्या गुटिका ।

कृष्णाशुण्ठीशताह्वानामभयानां पलं पलम् ।
गुडस्य षट्पलान्येषां गुटिका भ्रमनाशिनी ॥ १६६ ॥

ज्वरातिसारे कट्वङ्गाद्या वटकाः ।

कट्वङ्गबिल्वजम्ब्वाम्रकपित्थं सरसाञ्जनम् ।
ह्रीवेरं च निशे लाक्षां कट्फलं शुकनासिकाम् ॥१६७॥
रोध्रं मोचरसं शङ्खं धातकीं वटशुङ्गकान् ।
पिष्ट्वा तण्डुलतोयेन वटकानक्षसंमितान् ॥ १६८ ॥
छायाशुष्कान्पिबेत्क्षिप्रं ज्वरातीसारशान्तये ।
शमनान् रक्तपित्तस्य शूलातीसारनाशनान् ॥ १६९ ॥

प्लीहोदरे रोहितकवटकाः ।

भागाः पञ्चदशाथ कोलकभवा रोहीतकस्य त्रयः
पथ्यायास्त्रय एव तद्द्विगुणितं संयोज्य सिद्धं गुडम् ।
चातुर्जातकभागसंगमुरभीनश्चक्रो मोदकान्
प्लीहार्शःश्वयथूदरज्वरवमीन् गुल्माग्निसादाञ्जयेत् १७०

---

१ 'नीलिनीमपि' इति पा० । २ 'शुद्धं' इति पा० ।

गुडपाकविधिः।

यदा दर्वीप्रलेपः स्याद्यावद्वा तन्तुली भवेत्।
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुडः॥ १७१॥
क्षिप्तोऽप्सु निश्चलस्तिष्ठेत्पतितश्च न शीर्यति।
एष पाको गुडादीनां सर्वेषां परिकीर्तितः॥ १७२॥
सुखमर्द्यः सुखस्पर्शो गन्धवर्णरसान्वितः।
पीडितो भजते मुद्रां गुडः पाकमुपागतः॥ १७३॥

धातुक्षये महाकल्याणको गुडः।

पिप्पलीं पिप्पलीमूलं चित्रकं हस्तिपिप्पलीम्।
धान्यकं च विडङ्गानि यवानी मरिचानि च॥ १७४॥
त्रिफलां चाजमोदां च नीलिनीं जीवकं तथा।
सौवर्चलं ससिन्धूत्थं सामुद्रं चौद्भिदं वचाम्॥१७५॥
आरग्वधं त्वचं पत्रं सूक्ष्मैलामुपकुञ्चिकाम्।
नागरेन्द्रयवांश्चैव गृह्णीयात् कर्षभागिकान्॥ १७६॥
मृद्वीकायाः प्रधानाया दद्यात्पलचतुष्टयम्।
त्रिवृतायाः पलान्यष्टौ रसमामलकस्य च॥ १७७॥
प्रस्थं द्विगुणितं कृत्वा शनैर्मृद्वग्निना पचेत्
यदा पक्वं विजानीयात्तदैनमवतारयेत्॥ १७८॥
उदुम्बरेण धात्र्या वा बदरेणाथ वा समम्
यथाबलं प्रयुञ्जीत समीक्ष्य मतिमान् भिषक्॥१७९॥
सर्वाश्च ग्रहणीदोषान्प्रमेहांश्चैव विंशतिम्
अर्शांसि वातगुल्मांश्च कुष्ठानाहभगन्दरम्॥ १८०॥
उरोघातं प्रतिश्यायं हृद्रोगं चैव नाशयेत्।
धातुक्षीणे बलक्षीणे स्त्रीभिः क्षीणे क्षये तथा॥ १८१॥
ज्वराणां चैव सर्वेषां वन्ध्यानां चापि पुत्रदम्।
रूपौदार्यं स्वरौदार्यं मेधामाविन्दते स्थिराम्॥ १८२॥
महाकल्याणको ह्येष रसायनमनुत्तमम्।

ग्रहण्यां कल्याणको गुडः ।

कृष्णात्वग्ग्रन्थिकं वह्निं दीप्यकोपणसैन्धवम् ।
कृमिघ्नत्रिफलाधान्यकोलाजाज्यजमोदकाः ॥ १८३ ॥
पलिकानि त्रिवृच्चूर्णतैलयोश्च पलाष्टकम् ।
रसमस्थत्रयं धात्र्या गुडस्यार्धशतं क्षिपेत् ॥ १८४ ॥
एतत्कल्याणको नाम ग्रहणीपाण्डुजित्परम् ।

ग्रहण्यां यवान्याद्या गुटिका ।

यवानी धान्यकं बिल्वं चविकात्रुटिवल्कलम् ।
अम्लवेतसवृक्षाम्लं त्रिफला शिखिग्रन्थिकम् ॥ १८५ ॥
सौवर्चलं सैन्धवं च हपुषा च हरीतकी ।
यष्टिका सातला स्पृक्का पलमानानि चूर्णयेत् ॥१८६॥
गुडस्य तु पलान्यत्र दापयेद्द्विगुणानि तु ।
यवानीगुटिका ह्येषा ग्रहणीनाशनी परा ॥ १८७ ॥

चन्द्रप्रभा गुटिका ।

कीटघ्नेभकणाग्निमागधिजटामुस्ताशटीताप्यकं
भूनिम्बत्रिफलाग्गुराद्व्यचविकाव्योषं वचा धान्यकम् ।
रात्रीयुग्मविषात्रिवृन्निलवणं क्षारत्रिजातान्वितं
कर्षं कर्षमतः पुराद्वयपलं शैलेयकाष्टान्वितम् ॥ १८८॥
लौहात्तत्र सिताचतुष्पलयुतं स्याद्वंशजायाः पलं
हन्त्यर्शांसि षडेव गुल्ममजयं शोषं क्षयं कामलाम् ।
नाडीमर्मगदाश्मलोदररुजो दीर्घज्वरान्विद्रधीन्
यक्ष्माणं सभगन्दरं कफमरुत्पित्तोद्भवं पाण्डुताम् १८९॥
तं तं व्याधिसमूहशुक्रविकृतीन्ग्रन्थ्यर्बुदश्लीपदान्
मेहांश्शुक्रविनाशमश्मरिरुजस्त्वन्यांश्च देहस्थितान् ।
व्याधीन्हन्ति ह्यनेन विधिना चन्द्रप्रभा सेविता
मन्दाग्नेः परमं प्रदीपनमियं कुर्याज्जरां जर्जराम् ॥१९०॥

---

१ 'कृष्णे द्वे ग्रन्थिके' इति पा० ।

स्वेच्छाहारविधौ च पानविषये शीतातपे मैथुने
भुक्ता नास्ति विरोधिनी च सततं प्रोक्ता पुरा ब्रह्मणा १९१

पित्ते कल्याणका गुटिका ।

द्राक्षां नियोज्य विधिना द्विगुणां शिवायाः
संचूर्ण्य ह्यक्षफलमात्रमितां प्रभाते ।
कल्याणकारककृतां गुटिकामिमां यः
संसेवते भवति तस्य हि पित्तनाशः ॥ १९२ ॥
हृद्रोगरक्तविषमज्वरपाण्डुवान्ति-
कुष्ठानि कासपिटिकारुचिमेहमुख्याः ।
आनाहगुल्मगरविद्रधिकामलाद्याः
सर्वेऽपि ते विलयमाशु सुखेन यान्ति ॥ १९३ ॥

अर्शांसि प्राणदा गुटिका ।

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य च
पिप्पल्याः कुडवार्धं च चविकापलमेव च ।
पलं तालीसपत्रस्य पलार्धं केशरस्य च
द्वे पले पिप्पलीमूलाच्चित्रकस्य पलं तथा ॥ १९४ ॥
सूक्ष्मैलाकर्षमेकं तु कर्षं चोचमृणालयोः ।
अजमोदामजाजीं च सूक्ष्माण्येकत्र चूर्णयेत् ॥ १९५ ॥
गुडस्य विंशतिपलं सर्वमेकत्र कारयेत् ।
वट्यो ह्यक्षप्रमाणास्तु प्राणदा इति विश्रुताः ॥ १९६ ॥
पूर्वं भक्ष्यास्तु पश्चाच्च भोजनस्य यथाबलम् ।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेदनु ॥ १९७ ॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजान्यपि ।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च ॥ १९८ ॥
पानात्यये तथा पाण्डौ वातरोगे गलग्रहे ।
मन्दाग्नौ मूत्रकृच्छ्रे च तथैव विषमज्वरे ॥ १९९ ॥
कृमिहृद्रोगिणां चैव ख्याताः स्युरमृतोपमाः ।
शुण्ठ्याः स्थानेऽभया देया विबन्धे पित्तवायुजे ॥२००॥

प्राणदायां सिनां दत्त्वा चूर्णमानाच्चतुर्गुणाम् ।
अम्लपित्ते सशूले च प्रयोज्या गुदजातुरे ॥ २०१ ॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयं चानिलजे पित्तजे तु पलत्रयम् ॥ २०२ ॥

वार्ताकुगुटिका ।

चतुष्पलं सुधाकाण्डात्त्रिपलं लवणत्रयात् ।
वार्ताकात्कुडवं चार्कादष्टौ द्वे चित्रकात्पले ॥ २०३ ॥
दग्ध्वा रसेन वार्ताक्या वटिका भोजनोत्तरम् ।
कृता भुक्तं पचत्याशु कासश्वासार्शसां हिता ॥ २०४ ॥
विसूचिकाप्रतिश्यायहृद्रोगघ्नी च सा स्मृता ।

पाण्डुरोगेऽभयाद्यो मोदकः ।

अभया पिप्पलीमूलं मरिचं विश्वभेषजम् ।
पत्रत्वक्पिप्पलीमुस्ताविडङ्गामलकानि च ॥ २०५ ॥
एतानि समभागानि दन्ती च त्रिगुणा भवेत् ।
त्रिवृदष्टगुणा देया शर्करा चैव षड्गुणा ॥ २०६ ॥
मधुना मोदकान् कृत्वा मानतः कर्षसंमितान् ।
एकैकं भक्षयेत्प्रातः शीतं चानुपिबेज्जलम् ॥ २०७ ॥
तावद्विरच्यते जन्तुर्यावदुष्णं न सेवते ।
पाण्डुत्वकासविषमज्वरवह्निसादान्
प्लीहाक्षिरोगमथ चाश्मरिकां तथैव ।
हन्याद्रसायनमिदं खलु कामलां च
ह्यल्पव्ययं बहुफलं सततोपयोज्यम् ॥ २०८ ॥

गुल्मेऽभयाद्या वटकाः ।

हरीतक्याः पले द्वे तु ग्रथिकं चाम्लवेतसम् ।
पलार्धं चार्धकर्षांशा व्योषवृक्षाम्लचाम्पिकाः ॥ २०९ ॥
यवानी चाजमोदा च कारवीशटिपौष्करम् ।
विडं सौवर्चलं चव्यं हपुषाजाजिधान्यकम् ॥ २१० ॥
कोलाम्लं दाडिमं चैव चातुर्जातं च कार्षिकम् ।

गुडाद्द्विगुणितं चूर्णं कृत्वा तु वटकान्भजेत् ॥ २११ ॥
गुल्मानाहोदरप्लीहपाण्डुशोथग्रहणीगदान् ।
कासातीसारपार्श्वार्तिश्वासारोचककामलाः ॥२१२॥
मदात्ययवमीमेहहिक्कापीनसपित्तजान् ।
शमयेज्ज्वरशूले च वह्निदीप्तिकरं परम् ॥ २१३ ॥
कृष्णात्रिस्मृतियुक्तस्तु नित्यं जीवेत्समाः शतम् ।

विसूचिकायां जीरकाद्या गुटिका ।

जीरकभागद्वितयमेको भागस्तथैव मरिचस्य ।
द्वौ भागौ सिन्धूत्थाद्धिङ्गोर्भागश्चतुर्थांशः ॥ २१४ ॥
कार्या गुडेन वटिकाऽजीर्णालसकौ विसूचिकाध्मानौ ।
हन्ति सुखोदकपीताऽनुलोमनी मूढवातस्य ॥ २१५ ॥

बृहच्छिलागुटिका ।

काले रवितापाढ्ये कृष्णायसे शिलाजतु प्रवरम् ।
त्रिफलारससंयुक्तं त्र्यहं विशुद्धं पुनः शुष्कम् ॥ २१६ ॥
दशमूलस्य गुडूच्या रसे बलायास्तथा पटोलस्य ।
मधुकरसे गोमूत्रे प्रहरं भावयेत्क्रमश एकाहम् ॥ २१७॥
क्षीरेण तु तत्परतो भावयित्वा गवां पुनः शुष्कम् ।
सप्ताहं भाव्यं स्यात्काथेनैषां यथालाभम् ॥ २१८ ॥
काकोल्यौ द्वे मेदे विदारियुग्मं शतावरी द्राक्षा ।
ऋद्धियुगर्षभवीरामुण्डीतिकाजीरकांशुमत्यश्च ॥ २१९ ॥
रास्नापुष्करचित्रकदन्तीभकणाकलिङ्गचव्याब्दाः ।
कटुका शृङ्गी पाठा चेति पलांशानि कार्याणि ॥ २२० ॥
अब्द्रोणसाधितानां रसेन पादांशकेन भाव्यानि ।
गिरिजस्यैवं भावितशुद्धस्य पलानि दश षट् च ॥ २२१ ॥
द्विपलं च विश्वधात्रीमागधिकाकर्पटाख्यमरिचानाम् ।
चूर्णपलं च विदार्या तालीसपलानि चत्वारि ॥ २२२ ॥
षोडश सितापलानि तु चत्वारि घृतस्य माक्षिकस्याष्टौ ।

तिलतैलस्य द्विपलं चूर्णस्य पलानि पञ्च पञ्चानाम्॥२२३॥
त्वक्क्षीरिपत्रत्वङ्नागैलानां च मिश्रयित्वा तु।
गिरिजस्य षोडशपलैर्गुटिकाः कार्यास्ततोऽक्षसमाः॥२२४॥
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः।
तासामेका काले भक्ष्या पेयाऽपि वा सततम्॥ २२५॥
क्षीररसदाडिमरसाः सुरासवा हिमकरशिशिरतोयानि।
आलोडनाय तासामनुपाने वा प्रशस्यन्ते॥ २२६॥
जीर्णे लब्धक्षपयोजाङ्गलनिर्यूहयूषभोजी स्यात्।
सप्ताहं भोजनमेवमतः परं भवेत्सर्वसामान्यम्॥ २२७॥
भुक्त्वाऽपि भक्षितेयं यदृच्छया नावेहेद्रव्यं किंचित्।
निरुपद्रवा प्रयुक्ता सुकुमारैः कामिभिश्चैव॥ २२८॥
संवत्सरं प्रयुक्ता हन्त्येषा वातशोणितं प्रबलम्।
बहुवार्षिकमपि गाढं यक्ष्माणं चाढ्यवातं च॥ २२९॥
ज्वरयोनिशुक्रदोषान् प्लीहार्शःपाण्डुहृद्ग्रहणीरोगान्।
वर्ध्मनमिगुल्मपीनसहिक्काश्वासारुचिकासान्॥ २३०॥
जठरं श्वित्रं कुष्ठं पाण्ड्यं क्लैब्यं क्षयं मदं शोषम्।
उन्मादापस्मारौ वदनाक्षिशिरोगताम्रोगान्॥ २३१॥
आनाहमतीसारमसृग्दरकामले प्रमेहांश्च।
गलगण्डापच्यर्बुदविद्रधिभगन्दरं रक्तपित्तं च॥ २३२॥
अतिकार्श्यमतिस्थौल्यं स्वेदमपि श्लीपदं च विनिहन्ति।
दंष्ट्राविषमपि मौलं गरलानि बहुप्रकाराणि॥ २३३॥
मन्त्रौषधिप्रयोगानरियुक्तान् कौलिकांस्तथा सर्पान्।
पापमलक्ष्मीं चेयं शमयेद्गुटिका शिवा नाम॥ २३४॥
वल्यो हृष्या धन्या कान्तियशःश्रीप्रजाकरी चेयम्।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्था च॥ २३५॥

१ 'भागार्धं' इति पाठः।

श्रीमान्प्रकृष्टमेधास्मृतिबुद्धिबलान्वितो दृढशरीरः ।
पुष्टयोजोवर्णेन्द्रियतेजोबलसंपदोपेतः ॥ २३६ ॥
वलीपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः ।
संवत्सरमयोगात्, द्वाभ्यां शतानि चत्वारि ॥ २३७ ॥
सर्वामयजिन्महितं मुनिभिर्भक्ष्यं रसायनवरिष्ठम् ।
शिवगुटिकेति प्रथितमुक्तं गिरिशेन गणपतये ॥ २३८ ॥

पाण्डुरोगे लघुशिवगुटिका ।

कुटजत्रिफलानिम्बपटोलघननागरात् ।
भावितानि दशाहं वै रसैश्च द्विगुणैः खलु ॥ २३९ ॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा ।
त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्यान् पलोन्मितान् ॥ २४०॥
क्षुद्रायाः फलमूलाभ्यां पलं युञ्ज्यात्त्रिगन्धिकात् ।
मधुत्रिफलसंयुक्तान्कुर्यादक्षसमान् गुडान् ॥ २४१ ॥
दाडिमाम्बुपयःक्षीररसयूषसुरासवान् ।
भक्षयित्वा पिबेचानु निरन्नो भुक्त एव च ॥ २४२ ॥
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरान् ।
हृच्छूलशुक्रमूत्राग्निदोषशोफगरोदरान् ॥२४३ ॥
कासासृग्दरपित्तासृक्छोषगुल्मगलामयान् ।
नेत्रवर्त्मगतान् हन्युः सर्वरोगहराः शिवाः ॥ २४४ ॥

कुष्ठे वज्रकगुटिकाः ।

शैलस्य धातौ रजसः शिलाभ्यः सूर्यप्रतापाज्जतुसंनिकाशम् ।
कृष्णं स्रवेन्मूत्रसमानगन्धि शिलाजतु प्राज्ञतमास्तदाहुः २४५
रूप्यादिधातोर्गलितं दृषद्भ्यस्तेभ्यः प्रशस्तं प्रवदन्ति पूर्वम् ।
विशोधयेत्तत्सुदिने सुपूते द्विपश्चमूलीसलिले कटाहे ॥ २४६ ॥
लौहे समालोड्य दिवाकरस्य संतापनं रश्मिभिरेव कुर्यात् ।
प्रणीततापात्सरवद्गृहीत्वा पुनः पुनस्तत्समयोद्धरेच्च ॥ २४७ ॥
तावत्प्रदेयं सलिलं क्रमेण गाढस्य संदर्शनमेव यावत् ।

तिलतैलस्य द्विपलं चूर्णस्य पलानि पञ्च पञ्चानाम् ॥२२३॥
त्वक्क्षीरिपत्रत्वङ्नागैलानां च मिश्रयित्वा तु ।
गिरिजस्य षोडशपलैर्गुटिकाः कार्यास्ततोऽक्षसमाः ॥२२४॥
ताः शुष्का नवकुम्भे जातीपुष्पाधिवासिते स्थाप्याः ।
तासामेका काले भक्ष्या पेयाऽपि वा सततम् ॥ २२५ ॥
क्षीररसदाडिमरसाः सुरासवा हिमकरशिशिरतोयानि ।
आलोडनाय तासामनुपाने वा प्रशस्यन्ते ॥ २२६ ॥
जीर्णे लघ्वन्नपयोजाङ्गलनिर्यूहयूषभोजी स्यात् ।
सप्ताहं भोजनमेवमतः परं भवेत्सर्वसामान्यम् ॥ २२७ ॥
भुक्त्वाऽपि भक्षितेयं यदृच्छया नावहेद्भयं किंचित् ।
निरुपद्रवा प्रयुक्ता सुकुमारैः कामिभिश्चैव ॥ २२८ ॥
संवत्सरं प्रयुक्ता हन्त्येषा वातशोणितं प्रबलम् ।
बहुवार्षिकमपि गाढं यक्ष्माणं चाढ्यवातं च ॥ २२९ ॥
ज्वरयोनिशुक्रदोषान् प्लीहार्शःपाण्डुहृद्ग्रहणीरोगान् ।
वर्ध्मनमिगुल्मपीनसहिक्काश्वासारुचिकासान् ॥ २३० ॥
जठरं श्वित्रं कुष्ठं पाण्ड्यं क्लैब्यं क्षयं मदं शोषम् ।
उन्मादापस्मारौ वदनाक्षिशिरोगताश्चरोगान् ॥ २३१ ॥
आनाहमतीसारमसृग्दरकामले प्रमेहांश्च ।
गलगण्डापच्यर्बुदविद्रधिभगन्दरं रक्तपित्तं च ॥ २३२ ॥
अतिकार्श्यमतिस्थौल्यं स्वेदमपि श्लीपदं च विनिहन्ति ।
दंष्ट्राविषमपि मौलं गरल्यानि बहुप्रकाराणि ॥ २३३ ॥
मन्त्रौषधिप्रयोगानरियुक्तान् कौलिकांस्तथा सर्पान् ।
पापमलक्ष्मीं चेयं शमयेद्गुटिका शिवा नाम ॥ २३४ ॥
बल्या वृष्या धन्या कान्तियशःप्रजाकरी चेयम् ।
दद्यान्नृपवल्लभतां जयं विवादे सुखस्या च ॥ २३५ ॥

१ 'मागार्ध' इति पा० ।

श्रीमान्प्रकृष्टमेधास्मृतिबुद्धिबलान्वितो दृढशरीरः।
पुष्टयोजोवर्णेन्द्रियतेजोबलसंपदोपेतः॥ २३६॥
वलीपलितरोगरहितो जीवेच्छरदां शतद्वयं पुरुषः।
संवत्सरप्रयोगात्, द्वाभ्यां शतानि चत्वारि॥ २३७॥
सर्वामयजिन्महितं मुनिभिर्भक्ष्यं रसायनवरिष्ठम्।
शिवगुटिकेति मथितमुक्तं गिरिशेन गणपतये॥ २३८॥

पाण्डुरोगे लघुशिवगुटिका।

कुटजत्रिफलानिम्बपटोलघननागरात्।
भावितानि दशाहं वै रसैश्च द्विगुणैः खलु॥ २३९॥
शिलाजतुपलान्यष्टौ तावती सितशर्करा।
त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्यान् पलोन्मितान्॥ २४०॥
क्षुद्रायाः फलमूलाभ्यां पलं युञ्ज्यात्रिगन्धिकात्।
मधुत्रिफलसंयुक्तान्कुर्यादक्षसमान् गुडान्॥ २४१॥
दाडिमाम्बुपयःक्षीररसयूषसुरासवान्।
भक्षयित्वा पिबेच्चानु निरन्नो भुक्त एव च॥ २४२॥
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरान्।
हृच्छूलशुक्रमूत्राग्निदोषशोफगरोदरान्॥ २४३॥
कासासृग्दरपित्तासृक्छोषगुल्मगलामयान्।
नेत्रवर्त्मगतान् हन्युः सर्वरोगहराः शिवाः॥ २४४॥

कुष्ठे वज्रकगुटिकाः।

शैलस्य धातो रजसः शिलाभ्यः सूर्यप्रतापाज्जतुसंनिकाशम्।
कृष्णं स्रवेन्मूत्रसमानगन्धि शिलाजतु प्राज्ञतमास्तदाहुः २४५
रूप्यादिधातोर्गलितं द्यपद्मयस्तेभ्यः प्रशस्तं प्रवदन्ति पूर्वम्।
विशोधयेत्तत्सुदिने सुपूते द्विपञ्चमूलीसलिले कटाहे॥ २४६॥
लौहे समालोड्य दिवाकरस्य संतापनं रश्मिभिरेव कुर्यात्।
प्रणीततापात्सरवद्गृहीत्वा पुनः पुनस्तत्प्रमथोद्धरेच्च॥ २४७॥
तावत्प्रदेयं सलिलं क्रमेण गाढस्य संदर्शनमेव यावत्।

तावच्छिलाजत्वभिसन्निविष्टं समुद्धृतं यावदशेषतश्च ॥ २४८ ॥
अष्टौ पलान्यस्य विशोधितस्य ततः क्रमाद्भावयितुं यतेत ।
द्विपञ्चमूल्यौ चिरबिल्वमुस्तापटोलनिम्बत्रिफलाः पलांशाः॥२४९
सपिप्पलीजीरकरोहिणी च द्रोणेऽम्भसस्तान्द्विपलान्यथोक्तान् ।
प्रक्वाथ्य चैवाष्टमभागशेषं तस्मात्प्रदद्याद्भावनमल्पमल्पम्॥२५०॥
पात्रेऽथ लौहे परिशोषयेत्तत्पुनः पुनर्भावितमत्र यावत् ।
पलद्वयं पिप्पलिकर्कटाख्ये चूर्णीकृते लौहरजःसमांशे ॥२५१॥
पलं बृहत्याः सनिदिग्धिकायाः सितोपलामष्टपलोन्मितां तु ।
पलत्रयं वेणुजरोचनाया मधुत्रयं तद्विनिवेश्य कृत्वा ।। २५२ ॥
त्रिपष्टिसंख्यान्वटकान्विधिज्ञः खादिरत्सुरायारिपयोऽनुपानात् ।
रसेन वा लावकपिञ्जलानां तोयेन वा दाडिमसंस्कृतेन॥२५३॥
भुक्तेस्तथाऽभुक्तवति प्रदेया रोगार्दिते निष्परिहारिणी च ।
कुष्ठोदरश्वासगलामयांश्च भगन्दरान्मूत्रविष-प्रगुल्मान् ॥२५४॥
यक्ष्माणमर्शांसि सकासहिक्कां प्लीहां च हन्याद्विषमज्वरांश्च ।
यद्वेश्च दीप्तिं परमां करोति वलीश्च हन्यात्पलितानि चैव ॥२५५॥
सेव्या स्त्रियं वज्रकनामधेया मुनिप्रदिष्टा वटिका प्रधाना ।
वर्ज्याः कुलत्थाश्च सकाकमाच्यः कपोतमांसं च सदा प्रयोगे ॥

विषे सर्षपाद्या गुटिकाः ।

सर्षपाः पृष्ठिपर्णी च तगरं पद्मकेसरम् ।
हरीतालं विडङ्गानि रोध्रद्राक्षाप्रियङ्गवः ॥ २५७ ॥
चन्दनं वालकं मांसी विशाला समनःशिला ।
श्रीवासकनिशादार्वीपत्रकं ध्याममेव च ॥ २५८ ॥
सुरसप्रसवाः स्पृक्का रोचना गन्धनाकुली ।
शम्पाकः कुङ्कुमं दारु स्थौणेयं गिरिकर्णिका ॥ २५९ ॥
जात्याः पुष्पं प्रवालं च पिप्पली मरिचानि च ।
सूक्ष्मैला सिन्दुवारश्च यष्ट्याह्वं रोध्रमेव च ॥ २६० ॥

एतान्यङ्गानि षट्त्रिंशत्पुष्येण परिपेष्य वै ।
गुटिकां कोलमात्रां च छायाशुष्कां हि कारयेत् ॥२६१
नस्यपानाञ्जने चैषा सम्यग्लेपे च पूजिता ।
पुंसां सर्वविषार्तानां राजद्वारे रणे तथा ॥ २६२ ॥
वणिजां लाभकामानां विवादे च सदा हिता ।
सरीसृपा न तिष्ठन्ति यत्र तिष्ठति वेश्मनि ॥ २६३ ॥
अनया संप्रलिप्तस्य चौरवह्निभयं कुतः
सर्पदंशभयं चापि जलराशिभयं न च ॥ २६४ ॥

भूतदोषे सिद्धार्थकाद्या गुटिका ।

सिद्धार्थकव्योषवचाश्वगन्धानिशाद्वयं हिङ्गु पलाशकं च ।
बीजं करञ्जात्कुसुमं शिरीषात्फलं च वल्कश्च कपित्थवृक्षात् ॥
समाणिमन्थं सनतं च कुष्ठं श्योनाकमूलं किणिहीं सिता च ।
बस्तस्य मूत्रेण सुभावितं तत्पित्तेन गव्येन गुडान्विदध्यात् ॥
दुष्टव्रणोन्मादनिशान्ध्ययुक्ता उद्बन्धका वारिनिमग्नदेहाः ।
दिग्धाहता दर्पितसर्पदष्टास्तान्साधयत्यञ्जनपानलेपैः ॥२६७॥

शोषेऽश्वत्थघृतम्।

मूलत्वक्पत्रशुङ्गानामश्वत्थस्य समाहरेत् ।
शतं शतावरीं मेदां मधुपर्णीं पुनर्नवाम् ॥ २६८ ॥
सहाद्वयं गुडूचीं च श्रेयसीं च शिवां स्थिराम् ।
बृहतीं च वयस्थां च काकोलीं काकनासिकाम् ॥२६९
दशद्रोणेषु दुग्धस्य पचेत्तत्सममात्रया ।
सिद्धं शीतं पुनः क्षीरं मन्थानेन विमन्थयेत्॥ २७० ॥
जायते यद्घृतं तत्र तदुद्धृत्य पुनः पचेत् ।
. . . . . . ॥ २७१ ॥
. . . . . . . ।
उच्चटात्रायमाणाख्यशृङ्गाटककसेरुकैः ॥ २७२ ॥
मज्ज्ञा तालस्य बीजानां पुष्करस्य च केसरैः ।
धात्रीफलविदारीक्षुरसैः काश्मर्यजैः सह ॥ २७३ ॥

तत्सिद्धं कलशे ताम्रे कृतकौतुकमङ्गलः।
उद्घटेक्षुरसक्षौद्रतुगाक्षीर्याश्च बुद्धिमान् ॥ २७४ ॥
प्रस्थं प्रस्थं पृथग्दद्याच्छर्कराधंतुलां तथा।
आत्मगुप्ताफलानां च कुडवं मरिचस्य च ॥ २७५ ॥
त्रिसुगन्धिकृतावापं मन्थानेन विमन्थितम्।
पलिकान्मोदकान्कृत्वा स्थापयेन्मृन्मये नवे ॥ २७६ ॥
तेभ्यो द्वावप्यथवाऽप्येकं खादेद्योऽग्निबलं प्रति।
मोदकं नियताहारो ब्रह्मचारी जितेन्द्रियः ॥ २७७ ॥
स हन्त्याद्यक्ष्मणः सद्य एकादशविधं बलम्।
स्वरवर्णबलौदार्यतुष्टिपुष्टिविवर्धनम् ॥ २७८ ॥
आयुष्यं परमं चाग्र्यं भूतोपहतचेतसाम्।
व्याकुलीकृतधातूनां वृद्धानां क्षीणरेतसाम् ॥ २७९ ॥
वाजीकरणमप्येतद्वन्ध्यानां पुत्रदं परम्।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलवर्धनम् ॥ २८० ॥
हृत्पार्श्वग्रहणीदोषमूत्रकृच्छ्रापतन्त्रकान्।
अपस्मारं तथोन्मादं नाशयेत्तद्रसायनम् ॥ २८१ ॥

पाण्डुरोगे पुनर्नवामण्डूरम्।

पुनर्नवा त्रिवृच्छुण्ठी पिप्पली मरिचानि च।
विडङ्गं देवकाष्ठं च चित्रकं पुष्कराह्वयम् ॥ २८२ ॥
हरिद्राद्वितयं दन्ती त्रिफला चविका तथा।
कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम् ॥ २८३ ॥
एतानि समभागानि मण्डूरं द्विगुणं ततः।
मूत्रे चाष्टगुणे पक्त्वा स्थापयेत्स्निग्धभाजने ॥ २८४ ॥
पाण्डुशोफोदरानाहशूलार्शःकृमिरोगनुत्।

वातव्याधौ रसोनपिण्डः।

पलं शतं रसोनस्य तिलस्य कुडवं तथा।
हिङ्गु त्रिकटुकं क्षारौ द्वौ पञ्चलवणानि च ॥ २८५ ॥

शतपुष्पा वचा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यवानी च धान्यकं चापि बुद्धिमान् ॥२८६॥
प्रत्येकं च पलं चैषां सूक्ष्मचूर्णानि कारयेत् ।
घृतभाण्डे दृढे चैव स्थापयेद्दिनषोडश ॥ २८७ ॥
प्रक्षिप्य तैलमाणीं च प्रस्थार्धं काञ्जिकस्य च ।
खादेत्कर्षप्रमाणं च तोयं मद्यं पिबेदनु ॥ २८८ ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंस्थिते ।
अपस्मारेऽनले मन्दे कासे श्वासे गलामये ॥ २८९ ॥
सोन्मादे वातसंभग्ने शूले जन्तुषु शस्यते ।

वातव्याधौ बृहल्लशुनपिण्डः ।

चव्याचित्रकतालीसं यवानी धान्यकं वचा ।
अजमोदाऽश्वगन्धा च दाडिमं चाम्लवेतसम् ॥ २९० ॥
रास्नाग्रन्थिविडङ्गाह्वमभयाजीरकद्वयम् ।
क्षारद्वयसमायुक्तं लवणत्रयसंयुतम् ॥ २९१ ॥
शतमूली नतं कुष्ठं व्योषं पूतीकरञ्जकम् ।
शतपुष्पाऽजगन्धा च शटीरामठसंयुतम् ॥ २९२ ॥
निस्तुषं लशुनं कृत्वा द्रव्याणां च चतुर्गुणम् ।
घृतेन मिश्रितं पिण्डमक्षमात्रं तु भक्षयेत् ॥ २९३ ॥
आढ्यवाते हनुस्तम्भे मन्यास्तम्भे गलग्रहे ।
कोष्ठशीर्षगते वाते सर्वाङ्गानिलसंग्रहे ॥ २९४ ॥
तूनीप्रतूनीगुल्मेषु सप्तस्वेव क्षयेषु च ।
कृमिकोष्ठापहारी च ह्यशीतिपवनापहः ॥ २९५ ॥
क्षीराहारो भवेत्तस्य मांसाहारोऽथवापि वा ।
पुरुषस्य भवेद्देहस्तप्तहेमसमप्रभः ॥ २९६ ॥
त्रिफला गन्धकश्चैव गुग्गुलुः समभागतः ।
कार्या वातारितैलेन गुटिका वातरोगिणाम् ॥ २९७ ॥

वातव्याधौ व्योषाद्या गुटिका ।

व्योषं सग्रन्थिकं पथ्यां चित्रकं जीरकद्वयम् ।
अजमोदां यवानीं च वचां चैवमवल्गुजम् ॥ २९७ ॥
लवणत्रितयं क्षारौ समभागानि चूर्णयेत् ।
द्रव्याण्येतानि यावन्ति तावन्तं गुग्गुलुं शुभम् ॥२९८॥
पलार्धसंमितं चात्र योजयेच्चाम्लवेतसम् ।
गुटिकैषा हिता वाते सामे सन्ध्यस्थिमज्जगे ॥ २९९ ॥
नवं करोति भग्नं च जठरानलदीपनी ।
पूजिता देवदेवेन कालपादेन शम्भुना ॥ ३०० ॥

कुष्ठे स्वायम्भुवो गुग्गुलुः ।

शशिरेखा पञ्चपलं तावद्गिरिजश्च गुग्गुलोर्दश च ।
ताप्यस्य पलत्रितयं द्वे लोहाच्चरूवणिकायाश्च ॥ ३०१ ॥
त्रिफलाकरञ्जपल्लवखदिरगुडूचीवचात्रिवृद्दन्ती- ।
मुस्ताविडङ्गरजनीचतुरङ्गुलवह्निकुटजेश्च ॥ ३०२ ॥
पलिकैश्चूर्णमेतन्मूत्रेण गवां पिबेन्नरः प्रातः ।
कुष्ठी घृतमधुमिश्रं जयत्यसृग्वातमचिरेण[1] ॥ ३०३ ॥
श्वित्राणि कुष्ठकोठौ विषगरगुल्मोदरप्रमेहांश्च ।
उन्मादभगन्दरमपस्मृतिश्लीपदकृमिश्वासान् ॥ ३०४ ॥
जयति वलीपलीतानि च योगः स्वायम्भुवः प्रोक्तः ।

कुष्ठे धन्वन्तरीया समविंशतिका गुग्गुलुगुटिका ।

त्रिकटुत्रिफलामुस्तं विडङ्गं चव्यचित्रकौ ।
सूक्ष्मैला पिप्पलीमूलं माक्षिकं सुरदारु च ॥ ३०५ ॥
तुम्बरुः पौष्करं कुष्ठं विषा च रजनीद्वयम् ।
सौवर्चलं विडं चैव सैन्धवं हस्तिपिप्पली ॥ ३०६ ॥
द्रव्याण्येतानि यावन्ति तावन्तं गुग्गुलुं पचेत् ।
प्रक्षिप्य सर्पिषा सार्धं गुटिकां कारयेद्बुधः ॥ ३०७ ॥

---

1. 'स्वयम्भुवा' इति प०

अजमोदा विडङ्गं च दाडिमं साम्लवेतसम् ।
चाव्यिका पौष्करं दारु त्वगेलापत्रकेसरम् ॥ ३०८॥
एषामर्धपलैर्भागैः पलानि दश गुग्गुलोः ।
संमिश्र्य सर्पिषा सार्धं गुटिकां कारयेद्बुधः ॥३०९॥
भक्षयित्वा ससर्पिष्कां जीर्णे च प्रमिताशनम् ।
वातश्लेष्मविकारेषु नाडीदुष्टव्रणेषु च ॥ ३१० ॥
श्लेष्मकासे च शोफे च योगमेतं प्रयोजयेत् ।
जठरं योनिशूलं च ह्यन्तर्भूतं च विद्रधिम् ॥ ३११॥
पार्श्वशूलं कृमीन् गुल्मान्प्रमेहांश्छर्दरोचकौ ।
केवलानिलजान् रोगानशीतिं श्लैष्मिकानपि ॥३१२॥
सेविता नाशयत्याशु रसायनमनुत्तमम् ।

रास्नाद्यो गुग्गुलुः ।

रास्नामृतैरण्डसुराह्वविश्वं तुल्यं पुरेणाथ विमृद्य खादेत् ।
वातामयी कर्णशिरोगदी च नाडीयुतश्चैव भगन्दरी च ॥३१३॥

आमवाते धन्वन्तरीया द्वात्रिंशका गुग्गुलुगुटिका ।

त्रिकटुत्रिफलामुस्तं विडङ्गं चित्रकं वचा ।
चव्यैलापिप्पलीमूलं हपुषा सुरदारु च ॥ ३१४ ॥
तुम्बुरुः पौष्करं कुष्ठं विशाला रजनीद्वयम् ।
चाव्यिका जीरकं शुण्ठी सपत्रा च दुरालभा ॥ ३१५॥
सैन्धवं च विडं क्षारौ विषा च हस्तिपिप्पली ।
भागानेषां समान्कृत्वा तुल्यं कृत्वा तु गुग्गुलुम् ॥३१६॥
ततो बदरमात्रां तु गुटिकां कारयेद्बुधः ।
मेधावी भक्षयित्वा तां मधुना सह योजिताम् ॥३१७॥
आम हन्यात्सुदुर्वारमन्त्रवृद्धिं गुदकृमीन् ।
आनाहं च तथोन्मादं कुष्ठानि गुदजानि च ॥ ३१८॥
गृध्रसीं च हनुस्तम्भपक्षाघातापतानकान् ।
शोफं प्लीहामयं मेहं कामलामरुचिं तथा ॥ ३१९॥

१ 'विडं सौवर्चलं क्षारौ सैन्धवं' इति पा० ।

नाम्ना द्वात्रिंशको ह्येष गुग्गुलुः कथितो महान् ।
धन्वन्तरिकृतो योगः सर्वरोगनिषूदनः ॥ ३२० ॥

वातव्याधौ बिल्वाद्यो गुग्गुलुः ।

विल्वैलापटुहेमचव्यहपुषाद्राक्षाकणादाडिमं
मूलं पौष्करपक्षपाक्यमरिचं शुण्ठी यवानी वचा ।
कर्पूरेन्द्रयवाम्लवेतसत्रुटित्वक्तिन्तिडीकाभिकं
नैम्बं पद्मजाजियुग्मरुचकं क्षुद्राम्बुधात्रीफलम् ॥ ३२१ ॥
पाठाधान्ययवासदीप्यककणामूलं दलं त्राण्पिका
मुस्ता कर्षसमैश्चतुष्पलयुतैः सान्द्रस्य जीर्णस्य वै ।
दत्त्वा गुग्गुलुमत्र चाष्टपलिकं कृत्वा वटान्भस्पे-
ते जग्धा विनिहन्ति वातकफजान् व्याधीनशेषानपि३२२

अर्शःसि योगराजो गुग्गुलुः ।

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पाठाविडङ्गभार्गीन्द्रयवहिङ्गुवचान्वितैः ॥ ३२३ ॥
सर्षपातिविषाजाजिधान्यकै रेणुकायुतैः ।
गजकृष्णाजमोदाभ्यां कटुमूर्वासमन्वितैः ॥ ३२४ ॥
समभागान्वितैरेतैस्त्रिफला द्विगुणा भवेत् ।
त्रिफलासहितैरेतैः समभागस्तु गुग्गुलुः ॥ ३२५ ॥
एतच्चूर्णीकृतं सर्वं मधुना च परिप्लुतम् ।
योगराजमिमं विद्वान्भक्षयेत्प्रातरुत्थितः ॥ ३२६ ॥
अर्शांसि वातगुल्मं च पाण्डुरोगमरोचकम् ।
नाभिशूलमुदावर्तं प्रमेहान्वातशोणितम् ॥ ३२७ ॥
कुष्ठं क्षयमपस्मारं हृद्रोगं ग्रहणीगदम् ।
महान्तमग्निसादं च श्वासकासभगन्दरान् ॥ ३२८ ॥
रेतोदोषाश्च ये पुंसां योनिदोषाश्च योषिताम् ।
निहन्याच्चाशु तान्सर्वान्दुर्वारानप्यसंशयम् ॥ ३२९ ॥
एष निष्परिहारस्तु पानभोजनमैथुने ।

सततभ्यासयोगेन वलीपलितनाशनः ॥ ३३० ॥

नाडीव्रणे त्रिफलाद्यो गुग्गुलुः।

हन्ति नाडीव्रणक्लेदभगन्दरगलामयान्।
पिटिकां विद्रधिं गुल्मं गुग्गुलुस्त्रिफलान्वितः ॥३३१॥

प्रमेहे गोक्षुरगुग्गुलुगुटिका।

त्रिकटुं त्रिफलां मुस्तं गुग्गुलुं च समांशकम्।
गोक्षुरक्वाथसंयुक्तं गुटिकां कारयेद्बुधः ॥ ३३२ ॥
देशकालबलापेक्षी भक्षयेच्चानुलोमिनीम्।
न चात्र परिहारोऽस्ति कर्म कुर्याद्यथेप्सितम् ॥ ३३३ ॥
प्रमेहान्वातरोगांश्च वातशोणितमेव च।
मदरं मूत्रदोषं च मूत्राघातं च नाशयेत् ॥ ३३४ ॥

वातगुल्मे वातरक्ते च कैशोरको गुग्गुलुः।

धरमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्य तोयराशौ त्रिफलां च यथोक्तपरिमाणाम् ॥३३५॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन।
संसाधयेत्प्रयत्नाद्दर्व्या संघट्टयेच्च तद्यावत् ॥ ३३६ ॥
अर्धक्षयितं जातं तोयं ज्वलनस्य संपर्कात्।
अवतार्य वस्त्रपूतं पुनरपि संसाधयेदयःपात्रे ॥ ३३७ ॥
सान्द्रीभूते तस्मिन्नवतार्य हिमोपलस्पर्शे।
पथ्याचूर्णं द्विपलं त्रिकटुकचूर्णं षडक्षपरिमाणम् ॥ ३३८ ॥
कृमिरिपुचूर्णार्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः।
पलमेकं गुडूच्या दत्त्वा संमूर्च्छ्य यत्नेन ॥ ३३९ ॥
संस्थापयेच्च गुप्तं स्निग्धे भाण्डे घृतेन सुरभीणाम्।
आदाय तस्य मात्रां विहितातिथिदेवताप्रणतिः ॥ ३४० ॥
खादेद्यथाग्नि मनुजो व्याधिबलापेक्षया सम्यक्।
उपयुज्य चानुपानं यूषं क्षीरं सुगन्धिसलिलं च ॥ ३४१ ॥

तनुरोधि वातशोणितमेकद्वित्र्युल्बणं चिरोत्थमपि ॥ ३४२ ॥
भग्नस्रुतपरिशुष्कं स्फुटितमपि तन्निहन्ति यत्नेन ।
व्रणकासकुष्ठगुल्मश्वयथूदरपाण्डुरोगमेदांसि ॥ ३४३ ॥
मन्दाग्नित्वविबन्धं प्रमेहदोषांश्च नाशयति ।
सततं निषेव्यमाणः कालेन निहन्ति रोगगणम् ॥ ३४४ ॥
अभिभूय जरादोषं करोति कैशोरिकं रूपम् ।

त्रिफलाद्यो गुग्गुलुः ।

पलानि क्वाथयेत्षष्टिं त्रिफलायास्तु गुग्गुलोः ।
पलैः षोडशभिः सार्धमपां द्रोणद्वयेन तु ॥ ३४५ ॥
चतुर्भागावशेषं तु कृत्वा भूयोऽप्यधिश्रयेत् ।
घनीभूतं कषायं तु ज्ञात्वा चोद्धृत्य निःक्षिपेत् ॥३४६॥
छिन्नाव्योषविडङ्गानां चूर्णानि पलिकानि च ।
ततो मात्रां बलापेक्षी भक्षयेद्वातरक्तिनम् ॥ ३४७ ॥
कुष्ठिनं श्वित्रिणं चैव गुल्मिनं मेहिनं तथा ।
बलं मेधां स्मृतिं ज्ञानं तेज आयुर्विवर्धयेत् ॥ ३४८ ॥

गृध्रस्यां कंसाह्वयो गुग्गुलुः ।

पथ्याविभीतामलकीफलानां शतं क्रमेण द्विगुणाभिवृद्धम् ।
प्रस्थेन युक्तं तु पलङ्कषस्य द्रोणे जलस्य स्थितमेकरात्रम्॥३४९॥
अर्धावशेषं क्वथितं कषायं भाण्डे पचेत्तं पुनरेव लौहे ।
अमूनि पश्चादवतार्य दद्याद्द्रव्याणि संचूर्ण्य पलार्धकानि॥३५०॥
विडङ्गदन्तीत्रिफलागुडूचीकृष्णात्रिवृत्त्र्यूषणचित्रकाश्च ।
यथेष्टचेष्टस्य नरस्य शीघ्रं हिमाम्बुपानादितभोजनानि ॥३५१॥
निषेवमाणस्य निहन्ति रोगाञ्जङ्गगतान्गृध्रसिकादिकांश्च ।
प्लीहानमुग्रं जठराणि गुल्मं पाङ्गुल्यकण्डूकृमिवातरक्तम्॥३५२॥
कंसाह्वयो गुग्गुलुरेष नाम्ना ख्यातः क्षितौ तत्थितप्रभावः ।
बलेन नागेन्द्रसमं मनुष्यं वेगेन कुर्याद्धरिवेगतुल्यम् ॥ ३५३ ॥
आयुष्प्रदो रूपकरोऽतिपथ्यश्चक्षुष्प्रदः पुष्टिकरो विषघ्नः ।

क्षतस्य सन्धानकरो विशेषाद्व्रणेषु शस्तः सकलेषु चैव ॥ ३५४ ॥

गण्डमालायां त्रिफलाद्या गुग्गुलुगुटिका ।

त्रिफलात्रिवृतादन्तीनीलिनीचतुरङ्गुलाः ।
एषां तु भिषजा ग्राह्या प्रत्येकं पलविंशतिः ॥ ३५५ ॥
कुट्टितैः क्वथितैरेभिश्चतुर्द्रोणप्रमाणतः ।
पचेत्तु सलिलं तावद्यावद्द्रोणावशेषितम् ॥ ३५६ ॥
पञ्चाशत्तत्र निक्षिप्य गुग्गुलोस्तु पलान्यपि ।
पचेत् पाकघनीभूते त्वगेलानागकेसरम् ॥ ३५७ ॥
त्रिकटुत्रिफलामुस्तयवानीजीरकाणि च ।
पिप्पलीमूलदहनहपुषाकृष्णजीरकम् ॥ ३५८ ॥
वाण्विका साजमोदा च निन्तिडीकाम्लवेतसौ ।
सौवर्चलं च कृत्वैषां श्लक्ष्णचूर्णं विनिक्षिपेत् ॥ ३५९ ॥
पलार्धप्रमितैर्भागैः प्रत्येकं च विचक्षणः ।
ततोऽक्षमात्रां गुटिकां भक्षयेत्तां दिने दिने ॥ ३६० ॥
गण्डमालार्बुदग्रन्थ्यूरुस्तम्भोदरपीडितः ।
अनेनैव विधानेन गिरिजं वा प्रयोजयेत् ॥ ३६१ ॥

वातरक्ते बृहत्स्वायम्भुवगुग्गुलुः ।

अलम्बुषालोहचूर्णमनयोर्द्वे पले पृथक् ।
पलत्रयं च ताप्युत्थाद्धाकुच्याः पलपञ्चकम् ॥ ३६२ ॥
शिलाजतु तयोस्तुल्यं पलानि दश गुग्गुलोः ।
सर्वाण्येकत्र संचूर्ण्य गुटिकां कारयेद्बुधः ॥ ३६३ ॥
शाणं कर्पार्धकर्षं वा ततः खादेत्प्रयत्नतः ।
वातरक्तं च कुष्ठानि श्वित्राणि विविधानि च ॥ ३६४ ॥
अर्शांसि क्षुद्ररोगांश्च ग्रहणीं च भगन्दरान् ।
बस्तिजांश्छुक्रदोषांश्च पाण्डुताप्युदराणि च ॥ ३६५ ॥
शोफश्लीपदमानाहं यक्ष्माणं च विशेषतः ।
नाडीव्रणांश्च सर्वांस्तु हन्याद्विद्रधिहृद्द्रदान् ॥ ३६६ ॥

वृष्यो बल्यश्च धन्यश्च केश्यो मेधाग्निवर्धनः ।
आयुर्वर्णकरस्त्वच्यः पुत्रसौभाग्यदस्तथा ॥ ३६७ ॥
गर्भसन्धानकृत्प्रोक्तो गर्भपुष्टिकरः परम् ।
कालपादेन विख्यातो नाम्ना स्वायंभुवो भुवि ॥३६८॥

कासे सप्तचत्वारिंशतिका गुग्गुलुगुटिका ।

त्रिकटुत्रिफलामुस्तं कुटजं गजपिप्पलीम् ।
त्वगेलापत्रहपुषाग्रन्थिकं जीरकद्वयम् ॥ ३६९ ॥
विडङ्गं चित्रकं पाठां त्रायमाणां दुरालभाम् ।
पटोलेन्द्रयवान् दारु पञ्चैव लवणानि च ॥ ३७० ॥
यवानीं वाप्यिकां भार्गीं हरिद्रे सारिवाद्वयम् ।
दाडिमं पौष्करं धान्यं वचां क्षारद्वयं तथा ॥ ३७१ ॥
हरेणुकाजमोदं च तिन्तिडीकाम्लवेतसौ ।
सतुम्बरूणि सर्वाणि कार्षिकाण्युपकल्पयेत् ॥ ३७२ ॥
गुग्गुलुश्च समो देयो हविषा सह योजयेत् ।
गुटिकामक्षमात्रां तु भक्षयेन्मधुना सह ॥ ३७३ ॥
कासं श्वासं तथा शोफमर्शांस्यथ भगन्दरम् ।
हृत्पृष्ठपार्श्वशूले च हन्ति मन्दाग्नितामपि ॥ ३७४ ॥
आमवातमुदावर्तमेदोवृद्धिगुदक्रमीन् ।
आनाहं च तथोन्मादं कुष्ठपाण्डूदरामयान् ॥ ३७५ ॥
नाडीदुष्टव्रणान् सर्वान्प्रमेहश्लीपदानपि ।

वातरक्ते कन्यदिका गुग्गुलुगुटिका ।

त्रिफलातिविषादारुदार्वीमुस्ताटरूषकैः ।
खदिरासनरक्ताह्वागुडूचीनृपपादपैः ॥ ३७६ ॥
भूनिम्बनिम्बकटुकाकालिङ्गकुलकैः समैः ।
क्वाथं कृत्वा ततः पूर्वं शीतमष्टगुणेऽम्भसि ॥ ३७७ ॥
गुडूच्याः कारयेत्क्वाथमर्धे शिष्टेऽथ वारिणि ।
क्षिप्त्वा पुरं नवे भाण्डे स्थापयेद्रजनीमथ ॥ ३७८ ॥

आतपेनैव तीव्रेण कौशिकं परिशोषयेत् ।
शुष्कस्य तु पलान्यष्टौ तावन्मानं शिलाजतु ॥ ३७९
ताप्यचूर्णात्पलं चैकं द्वे पले मधुसर्पिषोः ।
एकीकृतं सुसंक्षुद्य लिह्यात्तं त्रिफलाम्बुना । ३८० ॥
तनुना मुद्गयूषेण जाङ्गलानां रसेन वा ।
जीर्णे यूषेण भुञ्जीत पुराणं शालिषष्टिकम् ॥ ३८१ ॥
यथारोगं यथासात्म्यं रसैर्यूषैश्च संस्कृतैः ।
त्रिसप्ताहप्रयोगेण वातरक्तं सुदारुणम् ॥ ३८२ ॥
निहन्ति वीर्यतः शीघ्रं कुष्ठरोगं व्रणानपि ।
छिन्नभिन्नांश्च संधत्ते दरिद्र इव कन्थडीम् ॥ ३८३ ॥

गण्डमालाद्यष्टाचत्वारिंशत्संज्ञा गुग्गुलुगुटिका ।

त्रिकटुत्रिफलामुस्तं कुटजं गजपिप्पलीम् ।
त्वगेलापत्रहपुषाग्रन्थिकं जीरकद्वयम् ॥ ३८४ ॥
विडङ्गं चित्रकं पाठां त्रायमाणां दुरालभाम् ।
पटोलेन्द्रयवान् दारु पञ्चैव लवणानि च ॥ ३८५ ॥
यवानीं वाप्पिकां भार्गीं हरिद्रे सारिवाद्वयम् ।
दाडिमं पौष्करं धान्यं वचां क्षारद्वयं तथा ॥ ३८६ ॥
पिप्पलीं चाजमोदां च तिन्तिडीकाम्लवेतसम् ।
तुम्बरूणि च सर्वाणि कार्षिकाण्युपकल्पयेत् ॥ ३८७
सूक्ष्मचूर्णीकृतेष्वेषु पलानि दश पञ्च च ।
माहिषाक्षस्य मतिमान् तत्पादेन च माक्षिकम् ॥३८८॥
द्रव्यैरष्टोत्तरैश्चत्वारिंशता परिनिर्मितः ।
गण्डमालापचीग्रन्थिमूकमिन्मिनगद्गदान् ॥ ३८९ ॥
क्षयाढ्यवातशोफांश्च मन्यास्तम्भं तथाऽर्दितम् ।
अर्शांसि च प्रमेहांश्च स्थौल्यदोषगुदामयान् ॥ ३९० ॥
अर्बुदं घ्राणरोगं च बाधिर्यं गृध्रसीं तथा ।
पूतिनासं प्रतिश्यायं पिटिकां क्षतविद्रधिम् ॥ ३९१ ॥

सोदरामग्रवृद्धिं च जयेदग्निं च दीपयेत् ।

अमृताद्या गुग्गुलुगुटिका ।

अमृतात्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुः ।
क्रमवृद्धमिदं मधुप्लुतं पिटिकास्थौल्यभगन्दराञ्जयेत् ॥ ३९२ ॥

शोफादौ गुडार्द्रकगुटिका ।

गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा ।
कर्षाभिवृद्धया त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥
शोफप्रतिश्यायगलास्यरोगान् सश्वासकासारुचिपीनसादीन् ।
जीर्णज्वरार्शोग्रहणीविकारान् हन्यात्तथाऽन्यान्कफवातरोगान् ॥

गुल्मे क्षारषट्पलवणम् ।

पलानि दश वारुण्याः स्नुक्काण्डात्पलविंशतिः ।
शतं सिंहीफलानां तु कुमार्याश्च पलद्वयम् ॥ ३९५ ॥
अर्कपत्रशतं चैकं शतं पूतीकपत्रकात् ।
महिषाक्षात्पिचुं चैकं रसोनात्पलपञ्चकम् ॥ ३९६ ॥
पलानि पञ्च सिन्धूत्थाचिरविल्वत्वचस्तथा ।
सौवर्चलात्तथा त्रीणि व्योषात्पञ्च पलानि च ॥३९७॥
पलद्वयं तु काचस्य सामुद्रलवणाद्दश ।
पलमेकं विडाख्यस्य कुडवं दरकृष्णतः ॥ ३९८ ॥
यवान्याश्चाजमोदायाः पलार्धं तु पृथक् पृथक् ।
रामठस्य पलं चैकं पलैकं जीरकद्वयात् ॥ ३९९ ॥
कुडवं राजिकायाश्च प्रस्थार्धं चित्रकस्य च ।
सर्वमेकत्र संयोज्य कुट्टयित्वा तुलूखले ॥ ४०० ॥
प्रस्थार्धं चार्कदुग्धस्य मानीं सर्षपतैलतः ।
एकत्र मिलितं कृत्वा चान्तर्धूमं ततो दहेत् ॥ ४०१ ॥
मस्तुना तं पिबेत्क्षारं कर्षार्धं कर्षमेव वा ।
गुल्मं शूलं तथाऽऽनाहमरुचिं पाण्डुतां तथा ॥ ४०२ ॥
हृद्रोगं ग्रहणीदोषमर्शोऽजीर्णं विसूचिकाम् ।

अष्ठीलामूर्ध्ववातं च वातकुण्डलिकां तथा ॥ ४०३ ॥
मूत्रग्रन्थिं प्रतिश्यायं कासं श्वासं तथाऽश्मरीम् ।
प्लीहानमामदोषांश्च वातश्लेष्मोद्भवान् गदान् ॥ २०४ ॥
आरोग्यलवणं हन्यात् सद्यस्याग्नेश्च दीपनम् ।

गण्डमालायां काञ्चनारगुग्गुलुः ।

पलानां दशकं ग्राह्यं काञ्चनारत्वचो बुधैः ।
षट्पला त्रिफला ग्राह्या व्योषं ग्राह्यं पलत्रयम् ॥ ४०५
पलैकं वरुणस्यापि त्वगेलापत्रकं तथा ।
कर्षकर्षमितं ग्राह्यं सर्वाण्येकत्र चूर्णयेत् ॥ ४०६ ॥
सर्वं चूर्णमिदं यावत्तावन्मात्रस्तु गुग्गुलुः ।
संमर्द्य गुटिकाः कार्याः शाणमात्रास्ततो बुधः ॥४०७॥
भक्षयेत्प्रातरेकैकामनुपानविशेषतः ।
गण्डमालां जयेदुग्रामपचीमर्बुदानि च ॥ ४०८ ॥
ग्रन्थीन्व्रणां सगुल्मांश्च विद्रधिं च भगन्दरम् ।
अनुपाने प्रयोक्तव्यः क्वाथो मुण्डीसमुद्भवः ॥ ४०९ ॥
क्वाथो वा खदिरस्याथ पथ्याक्वाथोऽथवा जलम् ।

गण्डमालायां काञ्चनगुटिका ।

त्रिफलायास्त्रयो भागा व्योषाच्च द्विगुणा मताः ॥४१०॥
तस्माच्च द्विगुणं ज्ञेयं काञ्चनारस्य वल्कलम् ।
एकीकृते तु चूर्णेऽस्मिन् समो देयोऽथ गुग्गुलुः ॥४११॥
क्षौद्रस्य च ततो दद्याद्दश भागान् विचक्षणः ।
सर्वासु गण्डमालासु गलगण्डे तथैव च ॥ ४१२ ॥
नाडीव्रणे विद्रधौ च गुटिकेयं प्रशस्यते ।

क्षतक्षीणे सर्पिर्गुटिका ।

त्वक्क्षीरीश्रावणीद्राक्षामूर्वर्षभकजीवकैः ।
वीराधिक्षीरकाकोलीबृहतीकपिकच्छुभिः ॥ ४१३ ॥
खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः ।
मत्स्यधात्रीविदारीक्षुरसैः प्रस्थं घृतात्पचेत् ॥ ४१४ ॥

शर्कराऽष्टपलं शीते क्षौद्रार्धमस्थमेव च ।
दत्त्वा सर्पिर्गुडान् कुर्यात्कासहिक्काज्वरापहान् ॥४१५॥
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ।
शुक्रनिद्राक्षयं तृष्णां हन्युः कार्श्यं सकामलम् ॥४१६॥

क्षतक्षीणे क्षीरादिलेहगुटिका ।

विदारीस्वरसं नीत्वा चतुष्पलमितं भिषक् ।
मस्थं तित्तिरिमांसस्य रसात् मस्थं घृतस्य च ४१७ ॥
मस्थद्वयं गवां क्षीरं रसादिक्षोस्तथाऽऽढकम् ।
पाकार्थं प्रक्षिपेद्भाण्डे तत्र कल्कमिमं क्षिपेत् ॥ ४१८ ॥
जीवन्ती चैव काकोल्यौ द्वे मेदे मधुकं तथा ।
जीवकर्षभकौ मुद्गमाषपर्ण्यौ प्रमाणतः ॥४१९ ॥
प्रत्येकं तत्पलार्धं स्यात्प्रियालस्य चतुष्पलम् ।
चतुष्पलं मधूकानां त्रिपला वंशलोचना ॥४२०॥
मधुयष्ट्या भवेत् कर्षो बलमज्जापलं तथा ।
कणापलं च खर्जूरात् पलानां विंशतिः स्मृता ॥४२१॥
कल्कं संपेषयेदिक्षो रसः पूर्वद्रवे क्षिपेत् ।
मन्दाग्निपाचनाल्लेहीभूते शीते क्षिपेत्सितताम् ॥ ४२२ ॥
विंशत्पलप्रमाणां तु मधुनोऽष्टपलं तथा [illegible]
अजाजीमरिचानां तु पलमेकं नियोजयेत् [illegible] ॥
क्षीरादिलेहपूर्वा तु गुटी हिक्काज्वरापहा ।
यक्ष्माणं तमकं श्वासं रक्तपित्तं हलीमकम् ॥ [illegible] ॥
शुक्रनिद्राक्षयं तृष्णां हन्यात्कार्श्यं सकामलम् [illegible]

प्रभावतीवटिका ।

हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ॥ ४२५ ॥
भद्रमुस्ता विडङ्गानि सक्षमं विश्वभेषजम् ।
सैन्धवं चित्रकं चैव कुष्ठं पाठा हरीतकी ॥ ४२६ ॥
एतानि समभागानि छागमूत्रेण पेषयेत् ।
गुटी कोलास्थिमाना च छायाशुष्का प्रभावती ॥४२७॥

अग्निमुखवटी ।

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत् ।
त्रयो भागा विडङ्गानां सैन्धवं च चतुर्गुणम् ॥ ४२७ ॥
अजाज्याः पञ्चभागाश्च षड्भागाश्चैव नागरात् ।
मरिचात् सप्त भागाः स्युः पिप्पली चाष्टभागिका॥४२८॥
कुष्ठं नवगुणं प्रोक्तं दशभागा हरीतकी ।
एकादश तथा वह्नेर्भागा द्वादश दीप्यकात् ॥ ४२९ ॥
गुडेन द्विगुणेनैव गुटिकां कारयेद्बुधः।
ततो वातरुजार्तानां नित्यमेव प्रयोजयेत् ॥ ४३० ॥

श्वासादौ सूर्यचन्द्रप्रभागुटिका ।

त्रिकत्रयं हरिद्रे द्वे तिक्ता तिक्तं शटी वचा ।
वेल्लचित्रकतालीसभार्गीपचकजीरकम् ॥ ४३१ ॥
द्वौ क्षारौ पिप्पलीमूलं पटूनि त्रीणि तुम्बरु ।
देवदारु वचा चव्यं धान्यकं गजपिप्पली ।
वत्सकातिविषादन्तीश्यामापुष्करकामृताः ॥ ४३२ ॥
भागोऽमीषां सूक्ष्मचूर्णीकृतानां
भागश्चार्धो माक्षिकादेय एव ।
तद्वद्वंश्या, भागवृद्धया परे स्यु-
रभ्रं लोहं शैलजं कौशिकश्च ॥ ४३३ ॥
सैमर्थ गुटिका कार्या सूर्यचन्द्रप्रभाभिधा ।
पूर्वाह्णे तां प्रयुञ्जीत माक्षिकेण परिप्लुताम् ॥ ४३४ ॥
अनुपाने प्रयुञ्जीत तक्रं मधु रसोत्तमम् ।
क्षीरं बदरतोयं वा शर्करामिश्रितं जलम् ॥ ४३५ ॥
घृतं मूत्रं तथा चाम्लस्वादुदाडिमजं रसम् ।
कासं श्वासं तथा शोषमरुचिं पार्श्ववेदनाम् ॥ ४३६ ॥
अर्शांसि [illegible] पाण्डुरोगं हलीमकम् ।

हृद्रोगं मूत्रकृच्छ्रं च श्वयथुं ग्रहणीगदम् ॥ ४३७ ॥
यकृत्प्लीहाभिवृद्धिं च कृमि ग्रन्थिं भगन्दरम् ।
श्लीपदं गण्डमालां च व्रणाद्यादीव्रणानपि ॥ ४३८ ॥
अतिस्थौल्यातिकार्श्ये च विद्रधीन्पिटिकामपि ।
नासानेत्राश्रिताद्रोगान् शिरोरोगान् सुदारुणान् ॥ ४३९॥
मुखरोगानशेषांश्च रक्तपित्तं स्वरक्षयम् ।
ज्वरं च सन्निपातोत्थं विषमं चापि पैत्तिकम् ॥ ४४० ॥
विंशतिं श्लैष्मिकांश्चैव संसृष्टान् सान्निपातिकान् ।
निजानृतुभवांश्चैव ये चान्ये नात्र कीर्तिताः ।
तांस्तान् प्रशमयत्येषा वृक्षमिन्द्राशनिर्यथा ॥ ४४१ ॥
मेधां स्मृतिं कान्तिमनामयत्व-
मायुःप्रकर्षं पवनानुलोम्यम् ।
स्त्रीषु प्रहर्षं बलमिन्द्रियाणा-
मग्नेश्च कुर्याद्विधिनोपयुक्ता ॥ ४४२ ॥

अतीसारे विशल्या गुटिका।

फलत्रयं त्र्यूषणजीरके च कुबेरसंज्ञं पलमात्रमेतत् ।
पलद्वयं नूतनधूतपल्याः कर्षकं चैव विषस्य योज्यम्॥४४३॥
पलार्धमात्रं करभस्य चूर्णं ततः समेनैव गुडेन योज्यम् ।
गुटी निबद्धा चणकप्रमाणा नियोजनीया हि सदाऽतिसारे४४४
चतुर्विधाजीर्णभयापहन्त्री स्मृता विशल्या गुटिकेति नाम्ना ४४५

शोथहरी गुटिका ।

शुण्ठीसक्तुपुनर्नवात्रिफालिकासैरेयशेफालिका-
मुस्तावासकनिम्बपत्रकटुकाबोलाश्वगन्धावचाः ।
व्योषच्छिन्नरुहाविडङ्गसहिताः सर्वाः समांशा बुधै-
र्विंशांशा च महौषधी परिमिता खण्डस्य विंशांशकाः ४४६
तत्तुल्येन च गोघृतेन मधुना सर्वं च संमर्दितं
बद्धा तेन शिवाप्रमाणगुटिका श्लेष्माणमुग्रं जयेत् ।

क्षीणस्यानिलजाश्निहन्ति सहसा सर्वप्रमेहांस्तथा
नाम्ना त्रोटहरी गुटी च विजया लोके च या विश्रुता ४४७

कासे चन्द्रप्रिया गुटिका ।

चन्द्रप्रिया लोमशगन्धवत्यौ कटुत्रिकं तिक्तकरोहिणी च ।
भूनिम्बभार्ग्यौ गिरिमल्लिका च समानभागं खलु सर्वद्रव्यम् ।
वासारसेनाथ गुटी विधेया मुहुस्तरं चाशु निहन्ति कासम् ॥४४८

मुखरोगे खदिरगुटी ।

जातीफलैलादलकुङ्कुमानि लवङ्गकङ्कोलकपुष्कराणि ।
वराङ्गकर्चूरयुतान्यमूनि समानि भागानि निशाकरस्य ॥४४९॥
भागद्वयं स्यान्मृगनाभिजायाः सपूतिकायाः खलु तुर्यभागः ।
षष्टिर्विभागाः खदिरस्य साराद्भागत्रयं तत्र वरस्य दद्यात् ॥४५०॥
एकीकृतं घृष्टसुचन्दनेन सुकामिनीहस्ततलैः प्रमर्द्य ।
सुवासितं पुष्पचयैः सुगन्धैर्वटी कृता स्यान्मुखरोगहन्त्री ॥४५१॥
स्त्रीणां प्रमोदं विपुलं ददाति मुखं सुगन्धं विशदं करोति ।
युवाऽतिरेताः सुभगो जनानां प्राणप्रियः स्यादतिकामिनीनाम् ॥
कण्ठं विपञ्चीनिनदेन तुल्यं करोत्यसौ खादिरसंज्ञका वटी ४५३

मुखरोगे द्वितीया खदिरगुटिका ।

पद्माह्वकागुरुकुङ्कुमैश्च तुल्यांशकैः श्लक्ष्णशिलाविपिष्टैः ।
सर्वैः समः स्यात्खदिरस्य सारः सारङ्गदर्पस्फटिकाधिवासः॥४५४
वल्लप्रमाणा गुटिका विधेयास्ताः सेविता घ्नन्ति कफप्रमेहम् ।
हिक्काप्रसादारुचिपीनसांश्च रोगानशेषान् खलु चास्यजातान् ॥
सूताभ्रहेमसहितां पूर्वोक्तां भक्षयेत्प्रातः ।
नाम्ना खादिरवटिका कथितेयं सिंहगुप्तेन ॥ ४५६ ॥

---

१ कुङ्कुमस्य । २ कस्तूरीकर्पूराभ्यामभिवासिता इत्यर्थः ।

वातरोगे त्वगाद्या गुटिका।

त्वगेले गन्धकं चैव गुग्गुलुं समभागतः।
कुर्याद्वातारितैलेन गुटिकां वातरोगिणाम् ॥ ४५७ ॥

रसायनार्थे विजयागुटिका।

पलत्रयं हरीतक्याश्चित्रकस्य तथैव तु।
एलात्वक्पत्रमुस्तानां भागोऽर्धपलिकः स्मृतः ॥ ४५८ ॥
व्योषं चाथ कणामूलं विषं च पलमात्रकम्।
नागकेसरचूर्णं तु कर्षं दद्याद्विचक्षणः ॥ ४५९ ॥
रेणुकार्धपलं चात्र रसस्य कर्षमेव च।
एतत्संभृत्य संभारं सूक्ष्मचूर्णं तु कारयेत् ॥ ४६० ॥
गुडस्यार्धतुलां दत्त्वा दर्व्या सम्यग्विघट्टयेत्।
ततस्तु गुटिकाः कृत्वा तस्मात्षष्टिशतत्रयम् ॥ ४६१ ॥
एकैकां भक्षयेत्प्रातः कृताहारो यथाबलम्।
मासेन पलितं हन्ति करोत्यग्निं द्वितीयके ॥ ४६२ ॥
शुक्रवृद्धिं तृतीये तु बलवर्णप्रसादनम्।
हन्त्यष्टादश कुष्ठानि सप्त चैव महाक्षयान् ॥ ४६३ ॥
प्लीहानं श्वासकासौ च ह्यन्त्रवृद्धिमरोचकम्।
अशीतिं वातजान्रोगान्मूत्रकृच्छ्रं भगन्दरम् ॥ ४६४ ॥
प्रमेहान्विंशतिं चैव तथाऽर्शांसि गलग्रहम्।
सर्पलूताविषं हन्ति सर्वं स्थावरजङ्गमम् ॥ ४६५ ॥
योनिदोषमपस्मारमुन्मादं विषमज्वरम्।
बलेन गजतुल्योऽसौ वेगेन तुरगोपमः ॥ ४६६ ॥
मायूरस्तु भवेदग्निर्वाराहश्रोत्र एव च।
चटकः स्त्रीविलासेन गृध्रदृष्टिश्च जायते ॥ ४६७ ॥
उपयोगात्परं जीवेन्नरो वर्षशतत्रयम्।
न चान्ने परिहारोऽस्ति न चाध्वनि न मैथुने ॥ ४६८ ॥
( ग्राम्यधर्मं च कुर्वाणो भोजनं च यथेच्छया। )

विजया नाम गुटिका विख्याता रुद्रभाषिता।
भक्षयन्ति नरा ये तु तेषां सिद्धिर्न संशयः॥ ४६९॥

वातरोगे योगोत्तमा गुटिका।

त्र्यूषणं त्रिफला क्षारौ लवणान्यथ चित्रकम्।
तालीसं चविकं शृङ्गी निशे द्वे गजपिप्पली॥ ४७०॥
एला त्वचं विडङ्गानि पौष्करं नागकेसरम्।
ताप्यकं दीप्यको मुस्ता समभागानि कारयेत्॥ ४७१॥
द्रव्याण्येतानि यावन्ति तावन्मात्रमयोरजः।
तावच्छिलाजतुर्देयः सर्वैस्तुल्यस्तु गुग्गुलुः॥ ४७२॥
संकुट्य गुटिकां कुर्यादक्षमात्रप्रमाणतः।
खादेत्ता मधुना युक्त्या तोयक्षीररसाशनः॥ ४७३॥
निर्यन्त्रितं सदा भोज्यं सर्वर्तुषु निरत्ययम्।
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पैत्तिकान्॥ ४७४॥
विंशतिं श्लैष्मिकांश्चैव प्रमेहांश्चैव विंशतिम्।
उदराणि तथा चाष्टौ श्वयथुं पवनात्मकम्॥ ४७५॥
विंशतिं मूत्रकृच्छ्राणि दुष्टनाडीव्रणानि च।
हन्त्यष्टादश कुष्ठानि सप्त चैव महाक्षयान्॥ ४७६॥
कासं श्वासं तथा हिक्कां हृच्छूलं छर्घरोचकम्।
गुल्मांश्च पाण्डुरोगं च जयेत्पञ्च प्रकारजम्॥ ४७७॥
चत्वारो ग्रहणीदोषाः षडर्शांसि तथैव च।
सर्वांस्तान्नाशयत्याशु तमः सूर्योदयो यथा॥ ४७८॥
अर्बुदं गण्डमालां च विद्रधिं सभगन्दरम्।
हरते सर्वरोगांश्च वृक्षमिन्द्राशनिर्यथा।
योगोत्तमेति विख्याता गुटिका वैद्यपूजिता॥ ४७९॥

प्रमेहे कर्पूरादिगुटिका।

... जातीफलं लोहमृताभ्रकं च।
...शुल्वे एला विषं धान्यकत्रिकं च।

तालीसपत्रं त्वथ नागपुष्पं तमालपत्रं कपिकच्छुबीजम् ।
सत्त्वं गुडूच्याः क्षुरकस्य बीजं वटी विधेया सितया समेता ॥४८१
वातप्रमेहं सकफं सपित्तं श्वासं च कासं बहुसन्निपातान् ।
बले च हीने स्वरभङ्गजाड्यं निहन्ति कामं खलु दीपयन्ती ४८२

गुल्मे गुडवटकः ।

गुडविश्वौषधपथ्यामागधिकादाडिमैः कृता गुटिका ।
विनिहन्ति भक्ष्यमाणा गुल्मार्शोवह्निसादगदान् ॥ ४८३ ॥

पाण्डुरोगे क्षारवटकाः ।

शृङ्गवेरविडङ्गानि पिप्पली मरिचानि च ।
नीलीपत्रं पृथक्पर्णी हरिद्राद्वयमेव च ॥ ४८४ ॥
मञ्जिष्ठा भद्रमुस्तं च शिग्रुबीजानि चित्रकम् ।
देवदारु वचा दन्ती त्रिफला हस्तिपिप्पली ॥ ४८५ ॥
शालिपर्णी च मूर्वा च द्राक्षा कटुकरोहिणी ।
शक्रबीजं सभल्लातं बृहत्यौ द्वे दुरालभा ॥ ४८६ ॥
शतावरी विशल्या च पाठा भार्गी हरेणुका ।
एतानि समभागानि सर्वाण्येकत्र कारयेत् ॥ ४८७ ॥
यावन्त्येतानि चूर्णानि द्विगुणं स्यादयोरजः ।
क्षारं च यवशूकानां ततो द्विगुणमावपेत् ॥ ४८८ ॥
गोमूत्रसंयुतान्कुर्याद्वटकानक्षसंमितान् ।
खादेदेकं ततो द्वौ वा सुखं चाशु पिबेज्जलम् ॥ ४८९ ॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगं भगन्दरम् ।
श्वयथुं श्वासकासौ च कृमिदोषांश्च नाशयेत् ॥ ४९० ॥
व्याधितस्य बलं ज्ञात्वा गवां मूत्रेण दापयेत् ।
पाण्डुरोगं निहन्त्याशु ब्रह्मदण्ड इवोद्धतम् ॥ ४९१ ॥
वटकाः क्षारपूर्वास्तु प्रयोज्याः सिद्धिमिच्छता ।
एष शङ्करणो योगो वैद्यानामर्थकृत्तया ॥ ४९२ ॥

कुष्ठे पथ्यावटकाः ।

थ्यां सेन्द्रयवां सकिंशुकफलां सार्कां तथाऽऽवर्तकीं
व्याधिघ्नेन तु योजितां हुतभुजा सारुष्करां बाकुचीम्।
द्वच क्रिमिशत्रुणाऽप्युपगतामेकैकवृद्धानिमान्
गोमूत्रेण विमृद्य तुल्यतुवरान्कुष्ठी वटान्भक्षयेत् ॥ ४९३ ॥
निहन्ति हतनासिकाकरजकर्णपादाङ्गुलि-
क्षरद्रुधिरपूतिपूयपरिजग्धजन्तुव्रणान् ।
मभिन्नचिरलक्षितस्वरमशेषकुष्ठं मह-
निहन्ति कुरुतेऽरुणार्कवपुषं नरं योगतः ॥ ४९४ ॥

ज्वरे फलत्रिकाद्यो मोदकः ।

फलत्रिकगुडव्योषशर्करात्रिवृताकृतम् ।
मोदकं भक्षयित्वाऽनुपिबेत्कोष्णं जलं पुनः ।
पार्श्वशूलेऽरुचौ कासे ज्वरे चानिलसंभवे ॥ ४९५ ॥

रसायने त्रिफलाद्या वटकाः ।

त्रैफलस्य तु चूर्णस्य पलानि दश संहरेत् ।
सप्त चैव विडङ्गानां लोहचूर्णं पलत्रयम् ॥ ४९६ ॥
पलानि दश वाकुच्याः शतं भल्लातकास्तथा ।
शिलाजतु पलद्वन्द्वं गुग्गुलोस्तु पलद्वयम् ॥ ४९७ ॥
पलं पुष्करमूलस्य पलार्धं तु फलस्य च ।
ग्रन्थिकाग्नी मरीचं च पिप्पल्यो विश्वभेषजम् ॥ ४९८ ॥
त्वक्पत्रं कुङ्कुमं मुस्ता नागकेसरमेव च ।
यष्टीमधुकरोध्रं च कार्षिकाण्युपकल्पयेत् ॥ ४९९ ॥
यावन्त्येतानि सर्वाणि तावत्खण्डं प्रदापयेत् ।
पलिकान्वटकान्कुर्यात्सर्वव्याधिविनाशनान् ॥ ५०० ॥
एकैकं भक्षयेत्प्रातर्यथेष्टं चात्र भोजनम् ।
प्लीहमर्शास्यतीसारं वातगुल्मं भगन्दरम् ॥ ५०१ ॥
... चैव सर्वाणि सप्तरात्राद्व्यपोहति ।

एतत्सर्वं प्रयुञ्जानो जीवेद्वर्षशतत्रयम् ॥ ५०२ ॥

अरुचौ लाजादो मोदकः ।

द्वादशाष्टचतुस्त्रिंशद्व्येकार्धार्धसमायुतैः ।
लाजस्तुगातिन्तिडीककोलव्योषत्रिजातकैः ।
सचन्द्रा मोदका रुच्याः क्रमाद्विगुणशर्कराः ॥ ५०३ ॥

त्रिफलाद्या गुटिका ।

त्रिफलाबदराणां स्याद्व्योषस्य च पलद्वयम् ।
कर्पूरकर्षो लाजानां पलद्वादशकं भवेत् ॥ ५०४ ॥
एलात्वक्पत्रकाणां तु पलं स्याद्वंशरोचना ।
पलाष्टिकाऽम्लवेतश्च चतुष्पल उदाहृतः ॥ ५०५ ॥
चूर्णाद्विगुणखण्डं स्याद्धृद्या वमिहरा परम्
यक्ष्माणं रक्तपित्तं च ज्वरं कासं च नाशयेत् ॥ ५०६॥

अर्शसि चित्रकगुटिकाः ।

चित्रकस्य पलं दत्त्वा त्रिवृतोऽर्धपलं तथा ।
कणाकर्षो गुडस्याष्टौ पलानि समुपाहरेत् ॥ ५०७ ॥
विंशतिश्च हरीतक्यो गुटिका दश कारयेत् ।
दशमे दशमे चाह्नि त्वेकैकां भक्षयेत् सुधीः ॥ ५०८ ॥
मण्डलानि च कण्डूश्च ह्यर्शांसि ग्रहणीं जयेत् ।

प्रमेहे वामदेवेन कथिता गुटिका ।

कटुत्रिकं वचा मुस्ता विडङ्गं चित्रकं विषम् ॥ ५०९ ॥
एतानि समभागानि पथ्या च द्विगुणा विषात् ।
पञ्चत्रिंशद्गुडाद्भागाः क्वाथयेन्मृदुनाऽग्निना ॥ ५१० ॥
कोलमाना गुटी ह्येषा हन्ति मेहं विशेषतः ।
मन्दाग्निमामवातं च स्वालामेहं सगुल्मकम् ॥ ५११ ॥

गुग्गुलुगुटिका ।

गुग्गुलुकुडवार्धं ककुभत्वगयोरजोविडङ्गानि ।
भल्लातकगोक्षुरकौ त्रिवृता त्रिफला द्वितीयार्धम् ॥ ५१२ ॥

भुक्त्वैनां गुटिकां यथेष्टचरितः षण्मासयोगात्पुमान्
सव्याधीन्सभगन्दरान्सपिटिकानर्शांसि दुष्टव्रणान्।
खालित्यं पलितं जरामपि तनोर्जित्वा प्रदीप्तानलः
सौभाग्याप्तसुखो निरामयतनुर्जीवेत्समानां शतम् ॥५१२॥

शोफे लघुत्रिफलागुग्गुलुगुटिका।

गुग्गुलुस्त्रिफला कृष्णा पञ्चनेत्रत्रिभागिकाः।
गुटिकाः शोफगुल्मार्शोभगन्दरवतां हिताः ॥ ५१३ ॥

वातव्याधौ पृथुत्रिफलाद्या गुग्गुलुगुटिका।

त्रिफला हपुषा मुस्तं चविका चित्रकः शटी।
यवानीग्रन्थिकव्योपसौवर्चलदुरालभाः ॥ ५१४ ॥
अजमोदा विडङ्गं च दाडिमं साम्लवेतसम्।
बाष्पिका पौष्करं दारु त्वगेलापत्रकेसरम् ॥ ५१५ ॥
एषामर्धपलैर्भागैः पलानि दश गुग्गुलोः।
संमिश्र्य सर्पिषा सार्धं गुटिकां कारयेद्बुधः ॥ ५१६ ॥
भक्षयित्वा ससर्पिष्कां जीर्णे च प्रमिताशनम्।
वातश्लेष्मविकारेषु नाडीदुष्टव्रणेषु च ॥ ५१७ ॥
श्लेष्मकासे च शोफे च योगमेनं प्रयोजयेत्।
जठरे योनिशूलेषु त्वन्तर्भूतं च विद्रधिम् ॥ ५१८ ॥
पार्श्वशूलं कृमीन् गुल्मान्प्रमेहान् छर्दरोचकौ।
केवलानिलजात्रोगानशीतिं श्लैष्मिकानपि।
विंशतिं नाशयत्याशु रसायनमनुत्तमम् ॥ ५१९ ॥

गुल्मे त्रिवृताद्या गुटिका।

त्रिवृत्पलं हिङ्गुकर्षस्त्रिक्षारस्य पलत्रयम्।
यवानीमरिचाजाजीधान्यकं शितिवारकम् ॥ ५२० ॥
उपकुञ्चीविडङ्गाजमोदाश्चार्धपलोन्मिताः।
पृथक्पलद्वयं दद्यादम्लवेतसजं रजः ॥ ५२१ ॥
... गुटिकां कारयेद्भिषक्।

पिबेत्क्षीरेण मन्थैर्वा सर्पिषाऽम्लैः सुखाम्बुना ॥ ५२२ ॥
काङ्कायनेन गुटिका संप्रोक्ता गुल्मनाशिनी ।
कफजं तु गवां मूत्रैः पयसा पित्तसंभवम् ॥ ५२३ ॥
त्रिफलारसमूत्रैस्तु निहन्यात्सान्निपातिकम् ।
रक्तगुल्मे तु नारीणामुष्ट्रीदुग्धेन वा पिबेत् ॥ ५२४ ॥

कृष्णाद्या गुटिका ।

शुण्ठीकृष्णाशताह्वानां साभयानां पलं पलम् ।
गुडस्य षट्पलान्येषा गुटिका भ्रमनाशिनी ॥ ५२५ ॥

इति श्रीवैद्यसोढलमाणिते गदनिग्रहे गुटिकाधिकारश्चतुर्थः समाप्तः ।

---

## अथातः पञ्चमो लेहाधिकारः प्रारभ्यते।

अर्शोघ्नि पथ्यावलेहः ।

श्यामागुडूच्यामलचित्रकाणां भागान् पलानां शतसंमितांश्च ।
सर्वान्पृथक्संपरिकल्प्य युक्त्या द्रोणद्वयेऽपां तु विपाच्य पात्रे ॥१॥
गैहे दृढे मन्दहुताशने च पादावशिष्टं विधिवद्विधिज्ञः ।
पूयः पचेत्तं तुलया गुडस्य शुक्लेन वस्त्रेण विशोधितस्य ॥ २ ॥
चूर्णीकृतैर्जीरकयुग्मदन्तीपाठाग्निपृथ्वीपणग्रन्थिकाह्वैः ।
धान्याजमोदेभकणायवानीभल्लातकारुष्यैश्च पलप्रमाणैः ॥ ३ ॥
प्रस्थत्रयेणाथ हरीतकीनामेकध्यमालोड्य शनैस्तु दर्व्या ।
ज्ञात्वा सुपक्वं रसगन्धवर्णैः कुम्भे निदध्यात्त्रिसुगन्धियुक्तम् ॥४॥
प्रस्थार्धयुक्तं मधुनोऽत्र शीते भल्लातकास्थिप्रभवाच्च तैलात् ।
दत्त्वा पलार्धं यवशूकजस्य चाष्टौ पलान्येव सितोपलायाः ॥५॥
एनं लिहेदक्षफलप्रमाणमर्शोविकारी प्रसमीक्ष्य वह्निम् ।
कुष्ठानि सर्वाणि निहन्ति हिक्कां श्वासं च कासारुचिपाण्डुरोगान्
मन्दानलत्वं ग्रहणीविकारान् गुल्मान्सशोफानुदरामयांश्च ।
शूलानि यस्माणमसृक्प्रवृत्तिं पथ्यावलेहोऽयमिति प्रदिष्टः॥ ७ ॥

अर्शसि चित्रकावलेहः ।

चित्रकस्य शतं दद्यात्तत्तुल्यो ग्रन्थिको मतः ।
पञ्चाशद्दशमूलस्य शेषान् पञ्चपलान् पृथक् ॥ ८ ॥
वलां भार्ङ्गीं शटीं पाठां पौष्करं मूलमेव च ।
चतुर्द्रोणेऽम्भसः पक्त्वा द्रोणशेषे तथैव च ॥ ९ ॥
पचेद्गुडशतं दत्त्वा लेहवत्साधु साधयेत् ।
चतुष्पलं तु पिप्पल्यास्तुगाक्षीर्याः पलद्वयम् ॥ १० ॥
त्रिजाताच्च पलं चैकं मरिचस्य पलं तथा ।
सूक्ष्मचूर्णं ततः कृत्वा दर्व्या सम्यग्विघट्टयेत् ॥ ११ ॥
पलमात्रं ततः खादेत्प्लीहगुल्मोदरार्शसि ।
हन्ति यक्ष्माणमत्युग्रं शीतार्तिं चाम्लपित्तकम् ॥ १२ ॥
भारद्वाजेन संप्रोक्तो लेहश्चित्रकसंज्ञकः ।

अर्शसि चित्रकावलेहः ।

तोयद्रोणे चित्रकमूलतुलार्धं
साध्यं यावत्पाददलस्थमथेदम् ।
अष्टौ दत्त्वा जीर्णगुडस्य पलानि
क्वाथ्यं भूयः सान्द्रतया समवेतम् ॥ १३ ॥
त्रिकटुकमिमिपथ्याकुष्ठमुस्तावराङ्ग-
कृमिरिपुदहनैलाचूर्णकीर्णोऽवलेहः ।
जयति गुदजकुष्ठप्लीहगुल्मोदराणि
प्रबलयति हुताशं शश्वदभ्यस्यमानः ॥ १४ ॥

रक्तपित्ते कूष्माण्डकावलेहः ।

शतं पलानि कूष्माण्डात् सुस्विन्नं निष्कुलीकृतम् ।
पचेत्तते घृतप्रस्थे पात्रे ताम्रमये दृढे ॥ १५ ॥
यदा मधुनिभः पाकस्तदा खण्डशतं क्षिपेत् ।
पिप्पलीशृङ्गवेराच्च द्वे पले जीरकस्य च ॥ १६ ॥
त्वगेलापत्रमरिचधान्यकानां पलार्धकम् ।
न्यसेच्चूर्णीकृतं तत्र दर्व्या संघट्टयेत्ततः ॥ १७ ॥

ग्रहण्यां कल्याणको गुडावलेहः ।

प्रस्थत्रये ह्यामलकीरसस्य शुद्धस्य दत्त्वाऽर्धतुलां गुडस्य ।
चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योपेभकृष्णाहपुषाजमोदैः ॥ ४० ॥
विडङ्गसिन्धुत्रिफलायवानीपाठाग्निधान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टौ ह्यष्टौ च तैलस्य पचेद्यथावत् ४१
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टस्त्रिसुगन्धियुक्तम् ।
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेददोषाः ॥ ४२ ॥
पाण्डूदरं गुल्मभगन्दरार्तिमेदःसमुत्थं च विकारजातम् ।
शाम्यन्ति, चायं चिरमन्दवह्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ४३
स्त्रीणां च वन्ध्यामयनाशनः स्यात्कल्याणको नाम गुडः प्रतीतः

भृष्टेऽपत्रिवृतां तैले त्रिसुगन्धि पिचुं पिचुम् ।
सिद्धे विधेयमत्रैव गुडे कल्याणपूर्वके ॥ ४४ ॥

कार्श्ये पञ्चजीरकावलेहः ।

कुस्तुम्बर्यौ यवानी समरिचमगधा दीप्यकाजाजिचव्याः
पथ्या श्यामाह्वमूलं कृमिहरहपुषे कारवी सातला च ।
शुण्ठीवन्दाकनागोद्भवशतकुसुमा मेथिका चाक्षभागाः
कंसेल्लाद्वागयुग्मं सकलगणमिदं चूर्णयेदौषधानाम् ॥४५ ॥
सर्पिःप्रस्थं प्रदद्याद्गुडपलदशभिः साधयेन्मन्दवह्नौ
क्षीरप्रस्थैश्चतुर्भिः स च सकलगदान्हन्ति युक्तस्त्रिगन्धैः ।
लेहोऽयं चानिलघ्नः कृशबलजननः शोधनश्चार्तवस्य
या स्त्री गर्भं न धत्ते जनयति तनयं दीर्घजीवानुयुक्तम् ४६

योनिरोगे पञ्चजीरकावलेहः ।

जीरकं हपुषा धान्यं यवानी बदराणि च ।
शताह्वा मेथिका हिङ्गुपत्रिका कामवृक्षकम् ॥ ४७ ॥ ॥
पिप्पली पिप्पलीमूलमजमोदा च वाप्पिका ।
चित्रकं च पलांशानि तथा चैव चतुष्पलम् ॥ ४८ ॥

---

१ प्रथेरोः ।

